Preserve cover

# PRABODHA CHANDRODAYA

A

DRAMA IN VI ACTS.

BY

SRI KRISHNA MISHRA.

WITH THE COMMENTARY

OF

MAHESHA CHANDRA NYAYALANKARA

EDITED BY

PANDIT JIBANANDA VIDYASAGARA B. A.

*Superintendent Free Sanskrit College.*




Calcutta.

PRINTED AT THE

KAVYAPRAKASHA PRESS.

*1874.*

*To be had from Pandit Jibananda Vidyasagara B. A. Superintendent. Free Sanskrit College of Calcutta.*

पण्डित-कुल-तिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | ... | ३।० |
| २ | धातुरूपादर्शः | ... | २ |
| ३ | शब्दस्तोम-महानिधि [ संस्कृत अभिधान ] | ... | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ... | ११ |
| ५ | सिद्धान्तविन्दुसार [ वेदान्त ] | ... | ॥० |
| ६ | तुलादानादि पद्धति [ वङ्गाक्षरैः ] | ... | ४ |
| ७ | गयाश्राद्धादि पद्धति | .. | १ |
| ८ | शब्दार्थ रत्न | ... | ।।।० |
| ९ | वाक्यमञ्जरी [ वङ्गाक्षरैः ] | ... | ।० |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | ...... | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | ... | १॥० |
| १३ | रत्नावली | ... | ।।।० |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥० |
| १५ | धनञ्जय विजय—सटीक | ... | ।० |
| १६ | महावीरचरित | ... | १॥० |
| १७ | साङ्ख्यतत्त्व कौमुदी—सटीक | | २ |
| १८ | वैयाकरणभूषणसार | ... | ।।।० |
| १९ | लीलावती | ... | ॥० |
| २० | वीजगणित | | १ |
| २१ | शिशुपालबध—सटीक [ माघ ] | ... | ६ |
| २२ | किरातार्जुनीय—सटीक [ भारवि ] | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड सटीक | ... | १ |
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ।।० |
| २५ | अष्टकम् पाणिनीयम् | ... | ।।।० |
| २६ | वाचस्पत्यम् [ संस्कृत वृहदभिधान ] | ... | ६० |
| २७ | कादम्बरी—सटीक | | ४ |
| २८ | रामप्रशस्ति | .. | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | | ४ |
| ३० | सर्व्वदर्शनसंग्रह | ... | १ |
| ३१ | भामिनीविलास—सटीक | ... | १ |
| ३२ | शिशूपदेश—सटीक | ...... | १ |

# प्रबोधचन्द्रोदयनाटकम्

श्रीकृष्ण-मिश्र-विरचितम् ।

श्रीमद्धेमचन्द्रन्यायलङ्कार-कृत-टीकासहितम् ।

वि, ए, उपाधि-धारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम्

कलिकातानगरे

काव्यप्रकाशयन्त्रे

मुद्रितम्

इं १८७४

# प्रबोधचन्द्रोदयनाटकम्।

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं

---

मातुरदूरसम्बन्धे वस्तुनिर्बन्धे महेशस्य।
त्रिभुवनबन्धसहिष्णोर्बालकविष्णोः स्मितं जयति॥
प्रबोधचन्द्रोदयनामनाटकं ज्ञानाग्निसंशुद्धविशिष्टहाटकम्।
भट्टोत्तराचार्य्यमहेश्वरः कृती टीकामयार्थेन करोति निर्म्मलम्॥
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः।

इति नाटके नियमात् सूत्रधारपदार्थः प्रधाननटो रङ्गस्थलमागत्य नान्दीपदवाच्यं मङ्गलं करोति। मध्याह्नार्केति। एतत्प्रबन्धप्रतिपाद्यस्याद्वितीयस्य ब्रह्मण उपासनाकथनमिदम्। ब्रह्मणश्च आदित्यवर्णं तमसः परस्तादित्यादि श्रुत्या सूर्य्यतेजःस्वरूपत्वम् नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या ज्ञानानन्दस्वरूपत्वञ्चेति वेदान्तसिद्धान्तः;तादृशब्रह्मणश्चाविद्यादशायां असाक्षात्कारात् त्रैलोक्यद्वैतं भासते अविद्यानाशे तु तदद्वैतमेव भासते न तु वहिःपदार्थान्तरमिति सिद्धान्तस्तदनुसारेणास्य श्लोकस्यान्वयो बोध्यः तथा हि स्वात्मा परमात्मा ब्रह्म तदात्मकं अवबोधं ज्ञानस्वरूपं महस्तेजःस्वरूपं सान्द्रानन्दं निविड़ानन्दस्वरूपं तत् प्रसिद्धं अमलञ्च निर्लेपं वयमुपास्महे आराधयामः। यदज्ञानतो यदसाक्षात्कारात् त्रैलोक्यमुन्मीलति ब्रह्मभिन्नतया तत्त्वेन भ्रमविषयीभवति। भ्रमाकारमाह खं वायुरित्यादि। खमाकाशं ज्वलनं तेजः इतीति इत्यादीत्यर्थः। तादृशोन्मीलने दृष्टान्तमाह, मध्याह्नार्क इति। मध्याह्नकालीनार्कस्य मरीचिकासु आकाशे दृश्यमानगलज्जलायमानरश्मिसमूहेषु पयःपूर इव तादृशमरीचिकासु पयःपूरो यथा उन्मीलति भ्रमविषयीभवति तथेत्यर्थः। तथा यत्तत्त्वं विदुषां जानतां यत्तत्त्वसाक्षात्-

सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥

अपि च । अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् ।
प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र
व्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥

नान्द्यन्ते सूत्रधारः । अलमति विस्तरेण । आदिष्टोऽस्मि सक-

---

कारवतां जनानां स्थाने तदेव तत्त्वालोक्य पुनर्निमीलति स्वबाह्यादिरूपतद्भि-
न्नत्वेन भ्रमाविषयीभवतीत्यर्थः । तादृशनिमीलने दृष्टान्तमाह स्रगभोगीति ।
भ्रमेण गृहीतः स्रजि मालायां भोगिभोगः सर्पकायः यथाऽनुपदं विशेष-
दर्शनात् निमीलति भ्रमाविषयीभवतीत्यर्थः । यद्यपि मरीचिकासु जलभ्रम-
निमीलनमेवोपस्थितत्वाद्दृष्टान्तयितुमुचितं तथापि तन्निमीलनमनुपदं
प्रायशो न भवतीत्यतो दृष्टान्तान्तरानुसरणम् । अष्टपदा भवेन्नान्दीत्यतो
नान्द्यन्तरमाह । अन्तर्नाडीति । परमयोगिना महेशेन ध्येयस्वरूपस्य ब्रह्मण
उपश्लोकनरूपं मङ्गलमिदम् । चन्द्रार्द्धमौलेरित्यत्र ध्येयत्वसम्बन्धे षष्ठी
तथा च यमिनो योगिनश्चन्द्रार्द्धमौलेर्ध्येयं स्वशरीराभ्यन्तरे प्रत्यगधोगामि
ब्रह्मस्वरूपं ज्योतिर्ध्यानवशाज्जगद्व्याप्यपि सत् जयति उत्कर्षाश्रयः तथा च
तत् प्रणमामीति लभ्यते । जगद्व्यापने ध्यानपरिपाटीमाह अन्तरिति ।
ज्योतिः किंभूतं ध्यानदशायां अन्तर्नाड्यां नियमितेन नियन्त्रितेन मरुता
करणभूतेन लङ्घितं प्राप्तं ब्रह्मरन्ध्रं येन तादृशम् । पुनः कीदृशं शान्तिप्रण-
यिनि शान्तिमति महेशस्यैव स्वान्ते चित्ते समुन्मीलता जायमानेनानन्देन
सान्द्रं व्याप्तं ध्यानवशाज्जायमानानन्दसम्बन्धमित्यर्थः । उत्पद्यमानानन्द-
महेशध्येयत्वमानन्दस्य ध्यातव्यज्योतिषि सम्बन्धः । इत्थं ब्रह्मरन्ध्रव्याप्त्या
तद्द्वारा जगद्व्यापने बोधिते तत्रैवोत्प्रेक्षते स्पष्टेति । ब्रह्मरन्ध्रेण न जग-
द्व्यापनं किन्तु स्पष्टं यथा स्यात्तथा ललाटनेत्रव्याजेन व्यक्तीकृतमिव नेत्रं
ललाटनेत्रं किञ्चिदमेव व्यक्तीकृतं ज्योतिर्जगद्व्याप्नोतीत्यर्थः । नान्द्यन्त इति ।
एतदष्टपदनान्दीपठनान्ते सूत्रधारः पुनराहेत्यर्थः । आदिष्टोऽस्मीति ।
श्रीमता गोपालेन आदिष्टोऽस्मीति दूरेणान्वयः । गोपालश्च कीर्त्तिवर्म्म
नरपतेः सेनापतिर्ब्राह्मणः । कीदृशेन तेन सकलानां सामन्तानां राज्ञां

लसामन्तचूड़ामणिमरीचिमञ्जरीनीराजितचरणकमलेन बलवदरिनिवहवक्षस्तटकवाटपाटनप्रकटितनरसिंहरूपेण प्रबलतरनरपतिकुलप्रलयमहार्णवमग्नमेदिनीसमुद्धरणमहावराहेण निखिलदिग्विलासिनीकर्णपूरीकृतकीर्त्तिपल्लवेन समस्ताशास्तम्बेरमकर्णतालास्फालनबहुलतरपवनसम्पातनर्त्तितप्रतापानलेन श्रीमता गोपालेन, यथा खल्वस्य सहजसुहृदो राज्ञः कीर्त्तिवर्म्मदेवस्य दिग्विजयव्यापारान्तरितपरमब्रह्मानन्दैरस्माभिः समुन्मीलितविविधविषयरसदूषिता इवातिवाहिता दिवसा इदानीन्तु कृतकृत्या वयं ;—यतः

नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा-

---

चूड़ामणिमरीचिभिर्नीराजितमुज्ज्वलितं चरणकमलं यस्य तादृशेन सकलभूपतिनमस्कृतेनेत्यर्थः। तथा बलवतोऽरिनिवहस्य वक्ष एव तटं कठिनत्वात् तदेव च कवाटं स्फारत्वात् तस्य पाटने विदारणे प्रकटितं प्रदर्शितं स्वस्मिन् नरसिंहरूपं येन तादृशेन नरसिंहेनापि हिरण्यकशिपोर्वक्षःपाटनात्। तथा प्रबलतरनरपतिकुलमेव प्रलयकालीनमहार्णवस्तत्र मग्नायाः कीर्त्तिवर्म्मराजसम्बन्धिन्या मेदिन्याः समुद्धरणे महावराहरूपेण महावराहेणापि प्रलयार्णवमग्नमेदिनीसमुद्धरणात्। तथा निखिला दिश एव विलासिन्यः तासां कर्णपूरीकृतकीर्त्तिरूपपल्लवेन। कर्णपूरः कर्णभूषा। समस्तदिगन्तपर्य्यन्तगामिकीर्त्तिनेत्यर्थः। तथा समन्ता ये आशास्तम्बेरमा दिग्दन्तिनः तेषां कर्णा एव तालाः करतालास्तेषामास्फालनेन बहुतरचालनेन यो बहुलतरो निविड़तरः पवनः तेन नर्त्तितः प्रतापानलो यस्य तादृशेन समस्तदिगन्तगामिप्रतापेनेत्यर्थः। आदिश्यमानमर्थमनुवक्तुं तत्कारणमाह यथेति विनोदयितुमिच्छाम इत्यन्तेन गोपालस्यैव वाक्येन। अस्माभिर्गोपालैः खलु समुन्मूलितेन उद्वृत्तेन नानाविषयरसेन दूषिता इव दिवसा अतिवाहिता अतिक्रान्ताः। अस्माभिः कीदृशैः स्वभावमित्रस्य कीर्त्तिवर्म्मदेवस्य राज्ञो दिग्विजयव्यापारेणान्तरितो व्यवधापितः परमब्रह्मानन्दो यैः तादृशैः। नीताः क्षयमिति। नृपतेः कीर्त्तिवर्म्मणो विपक्षाः क्षितिभुजो राजानः क्षयं नीताः

रत्नवती क्षितिरभूत् प्रथितैरमात्यैः ।
साम्राज्यमस्य विहितं क्षितिपालमौलि-
मालार्च्चितं भुवि पयोनिधिमेखलायाम् ॥

तदयं शान्तिरसप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छाम: । तद्यदपूर्व्वमत्रभवद्भिः श्रीकृष्णमिश्रैः प्रबोधचन्द्रोदय नाम नाटकमभिनिर्म्माय भवत: समर्पितमासीत् तदद्य श्रीकीर्त्ति-वर्म्मण: पुरस्तादभिनेतव्यं भवता । अस्ति चास्य भूपतेः सपरि-षदस्तदालोकनकुतूहलमिति तद्भवतु गृहं गत्वा गृहिणीमाहूय संगीतमवतारयामि । [परिक्रम्य नेपथ्याभिमुखमवलोक्य] आर्य्ये ! इतस्तावत् ।

प्रविश्य नटी । अज्ज ! इयह्मि आणवेदु अज्जो को णिओओ अणुचिट्ठी अदुत्ति ।

---

प्रापिता: तदीया क्षितिश्च प्रथितैः ख्यातैः अर्थान्मदतिरिक्तैः अमात्यै रत्नाक्त्यभूत् पयोनिधिमेखलायां समुद्रवेष्टितायां भुवि क्षितिपालानां मौलि-मालया मौलिश्रेण्या अर्च्चितं साम्राज्यं चास्य कीर्त्तिवर्म्मणो विहितमर्यान्मयेत्यर्थः । यास्ति यत्राज्ञया राज्ञः स सम्राडिति कीर्त्तितः । तादृशस्य साम्राज्यस्य अर्च्चितत्वञ्च सम्राजोऽर्च्चनादेव बोध्यम् । तदयमिति । वयं गोपालाः । आदिश्यमानमर्थमाह तद्यदिति । अत्रभवद्भिः पूज्यैः अभिनि-र्म्माय रचयित्वा भवतः सूत्रधारस्य स्थाने । भवतेति पर्य्यन्तमादिश्यमानार्थ-कथनम् अस्ति चेत्यादिकं सूत्रधारस्योक्तिः । परिक्रम्येति स्वगृहाभिमुखं गत्वेत्यर्थः । नेपथ्यं वेशरचनस्थानम् अप्रविष्टसमाचारस्तत्र वर्ण्यते अतो-नेपथ्यमेव स्वगृहं बोध्यम् । एवमुत्तरोत्तरमपि नेपथ्ये इत्युक्ते अप्रविष्ट-समाचारो बोध्यः । इतस्तावदिति । इतो मत्समीपे आगम्यतां तावदित्यर्थः । नटी वदतीत्यर्थः एवमुत्तरत्र बोध्यम् । नाटके स्त्रीणां नीचानाञ्चोक्तिः प्राकृतमत आह अज्जेति । आर्य्य ! इयमस्मि आज्ञापयतु आर्य्यः कोनियोगोऽ-

सूत्र । आर्य्ये ! विदितमेव भवत्या ।

अस्ति प्रत्यर्थिपृथ्वीपतिविपुलबलारण्यमूर्च्छत्प्रताप-
ज्योतिर्ज्वालावलीढत्रिभुवनविवरो विश्वविश्रान्तकीर्त्तिः ।
गोपालो भूमिपालान् प्रसभमसिलतामात्रमित्रेण जित्वा
साम्राज्ये कीर्त्तिवर्म्मा नरपतितिलको येन भूयोऽभ्यषेचि ॥

अपि च । अद्याप्युन्मदयातुधानतरुणीचञ्चत्कारास्फालन
व्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः ।
उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिल-
प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणक्षोणयः ॥

तेन च शान्तपथप्रस्थितेनात्मनो विनोदार्थं प्रबोधचन्द्रोदयं नाम नाटकमभिनेतुम्, आदिष्टोऽस्मि तदादिश्यन्तां भर-

---

नुष्ठीयतामिति । संस्कृतम् । नियोग आदेशः अनुष्ठीयतां क्रियताम् अर्थान्मया । विदितं ज्ञातं सामान्यतो नपुंसकनिर्द्देशः । ज्ञातमर्थं दर्शयति अस्तीत्यादिश्लोकद्वयेन । गोपालोऽस्ति स कीदृशः प्रत्यर्थिनां प्रतिकूलानां पृथ्वीपतीनां विपुलं बलं सैन्यमेवारण्यं तत्र मूर्च्छतः प्रतापानलस्य ज्योतिर्ज्वालयावलीढं त्रिभुवनरूपविवरं गर्त्तो यस्य तादृशः । विश्वस्मिन् विभ्रान्ता कीर्त्तिर्यस्य तादृशः । असिलतामात्रसहायेन येन प्रसभं बलाद्भूमिपालान् जित्वा अर्थात्तै राज्यादुत्खातः कीर्त्तिवर्म्मा नरपतितिलको भूयः साम्राज्येऽभ्यषेचि अभिषिक्त इत्यर्थः । अद्याप्युन्मदेति । रणक्षोणयो रणभूमयो विततैर्नादैरद्यापि यस्य यशांसि उद्गायन्ति । अचेतनानां रणक्षोणीनां नादानुपपादयति प्रचण्डानिलेति । प्रचण्डानिलैः प्रक्षुभ्यतां सञ्चलतां करिकुम्भकूटानां समूहानां कुहरेषु छिद्ररूपगुहासु व्यक्तैर्नादैरित्यर्थः । वायुफूत्कार एव रणक्षोणीनां नाद इति भावः । रणक्षोणयः कीदृश्यः उन्मदानां यातुधानतरुणीनां राक्षसाङ्गनानां चञ्चतां चलतां कराणामास्फालनेन चालनेन व्यावल्गताञ्चलतां नृकपालरूपतालानां करतालानां रणितैः शब्दैर्नृत्यन्त्यः पिशाचाङ्गना यत्र तादृश्यः मांसशोणितभक्षणार्थिराक्षसाङ्गनाक्षतनृकपालशब्दैर्मांसशोणित-

ता वर्णिकापरिग्रहाय ।

नटी [सविस्मयम्] । अच्चरीअं ! अच्चरीअं ! जेण निअभुअबलणिब्भच्छिदसअलराअमण्डलेन आअस्साअट्टिअकढिणकोअण्डबहलबरिसन्तसन्तदसरणिअरजज्जरि अतुरअतरङ्गमालम् णिरन्तरणिवड़न्ततिक्खविक्खित्तसहत्थसत्थपज्जासिदुत्तुङ्गमाअङ्गमहामहीअरसहस्सं भम्मन्तभुअदण्डचण्डमन्दराभिघादघूस्सन्तसअलपत्तिसलिअसंघादं कस्सेससाअरं णिम्महिअ महुमहणेण विअ च्छीरसमुद्दं समासादिदा समरबिजअलच्छी: तस्स साम्पदं सअलमुणिअणसलाहणीअचरिदस्स कधं तादिसो उवसमो संवुत्तो ।

सूत्र । आर्य्ये ! निसर्गसौम्यमेव ब्राह्मं ज्योतिः कुतोऽपि कारण-

---

भक्षणार्थिपिशाचाङ्गनान्त्यम् । ननु तादृशगोपालस्यास्तित्वज्ञाने किमायातमित्यत आह तेन चेति । भरता नटाः वर्णिका वेशः । अच्चरीअमित्यादि । आश्चर्यमाश्चर्यं ! येन निजभुजबलनिर्भर्त्सितसकलराजमण्डलेन आकर्णाकृष्टकठिनकोदण्डबहलवृष्यमाणसन्ततशरनिकरजर्ज्जरिततुरगतरङ्गमालं निरन्तरनिपतत्तीक्ष्णविक्षिप्तस्वहस्तशस्त्रपर्य्यासितोत्तुङ्गमातङ्गमहामहीधरसहस्रं भ्रमद्भुजदण्डचण्डमन्दराभिघातघूर्णमानसकलपत्तिसलिलसंघातं कर्णसैन्यसागरं निर्म्मथ्य मधुमथनेन क्षीरसमुद्रमिव समासादिता समरविजयलक्ष्मीः तस्य साम्प्रतं सकलमुनिजनश्लाघनीयचरितस्य कथमीदृश उपशमः संवृत्त इति । सं ! येन गोपालेन कर्णसंज्ञकराजसैन्यसागरं मधुमथनेन क्षीरसमुद्रमिव निर्म्मथ्य समासादिता समरविजयलक्ष्मीरित्यन्वयः । कर्णसैन्यसागरं कीदृशं आकर्णाकृष्टेन कोदण्डेन धनुषा बहलवृष्यमाणो निविड़पात्यमानो यः सन्ततशरनिकरस्तेन जर्ज्जरिताः सर्वाङ्गक्षतास्तुरगा एव तरङ्गमाला यत्र तादृशं सागरे तरङ्गसत्त्वात् । तथा निरन्तरं निपतद्भिस्तीक्ष्णैर्विक्षिप्तैरतिप्रेरितैः स्वहस्तशस्त्रैः पर्य्यासिताः पातिता ये उत्तुङ्गमातङ्गास्त एव महामहीधरसहस्रं यत्र तादृशं सागरेऽपि मैनाकादिमहीधरसत्त्वात् । तथा भ्रमद्भुजदण्ड

वशात् प्राप्त विकारमपि पुनः स्वभावेऽवतिष्ठते यतः सकल-भूपालकुलप्रलयकालाग्निरुद्रेण चेदिपतिना समुन्मूलितं चन्द्रान्वयपार्थिवानां पृथिव्यामाधिपत्यं स्थिरीकर्त्तुमयमस्य संरम्भः। पश्य, तथा कल्पान्तसंक्षोभलङ्घिताशेषभूभृतः।

स्थैर्य्यप्रसादमर्य्यादास्ताएव हि महोदधेः॥

अपि च। भगवन्नारायणांशसंभूता भूतहिताय तथाविध-पौरुषभूषणाः क्षितितलमवतीर्य्य निष्पादितकृत्याः पुनः शान्तिमेव प्रपद्यन्ते। तथा हि परशुराममेव तावदाकलयतु भवती।

येन त्रिःसप्तकृत्वो नृपबहुलवशामांसमस्तिष्कपङ्क—

प्राघारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः॥

यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्द्दयो विश्रुतोऽसौ।

राजन्योत्तांशकूटक्रथनपटुरटद्घोरधारः कुठारः॥

---

एव मन्दरस्तस्याभिघातेन घूर्णमानाः सकलपत्तय एव सलिलसंघातो यत्र तादृशं सागरस्यापि मन्दराभिघातघूर्णमानसलिलत्वात्। सकलमुनिजनश्लाघनीय चरितस्येत्यं यः प्रश्नविषयो बोद्धव्यः सत्वघातिनस्तथात्वस्याश्चिद्धत्वात्। चेदिभूपतिना कर्णसंज्ञकभूपालेन। तथा कल्पान्तेति। तथा तादृशं प्रसिद्धं यथा स्यात्तथा कल्पान्ते यत्संक्षोभं चलनं तेन लङ्घिताः प्लाविता अशेषभूभृतः समस्तपर्वता येन तादृशस्य महोदधेस्ताः पूर्वानुभूता एव धैर्य्यादयः। मर्य्यादास्तीरसीमाः। तथाविधपौरुषं वैरिनाशजन्यपौरुषं कृत्यं कर्त्तव्यम्। येन त्रिःसप्तेति। येन जामदग्न्येन क्षर्याद्वैरिणां भूरिच्युतरुधिररूपसरितो वारिपूरे त्रिःसप्तकृत्वस्त्रिसप्तवारान् अभिषेकः स्नानमकारि कृतः सोऽपि श्रीमान्मुनिर्जामदग्न्यः प्रशान्तकोपज्वलनस्तपोभिर्विशिष्टः सन् शाम्यति शान्तयुद्धरसो भवतीति श्लोकद्वयेनान्वयः। किं कृत्वा स्ववीर्य्यान्नृपाणां कुलं समुत्खाय भूमेर्भारमवतार्य्य वारिपूरे कीदृशे नृपाणां बहुलानि यानि निविड़ानि वशामांसमस्तिष्काणि तान्येव पङ्कप्राघारः पङ्कसमूहो यत्र तादृशे वशा मज्जा मस्तिष्कं तैलम्। तथा यस्यासौ प्रसिद्धः कुठारः स्त्रीबालवृद्धपर्य्यन्तानां

सोऽपि स्ववीर्य्यादवतार्य्य भारं भूमेः समुत्खाय कुलं नृपाणाम्।
प्रशान्तकोपज्वलनस्तपोभिः श्रीमान् मुनिः शाम्यति जामदग्न्यः ॥

तथायमपि कृतकृत्यः संप्रति परमामुपशमनिष्ठां प्राप्तः ;
येन च । विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।
श्रीकीर्त्तिवर्म्मनृपतेर्बोधस्येवोदयः कृतः ॥

[नेपथ्ये] । आः ! पाप ! शैलूषाधम ! कथमस्मासु जीवत्सु स्वामिनो महामोहस्य विवेकसकाशात् पराजयमुदाहरसि ।

सूत्र० । [ ससम्भ्रमं विलोक्य ] अये !

उत्तुङ्गपीवरकुचद्वयपीड़िताङ्ग-
मालिङ्गितः पुलकितेन भुजेन रत्या ।
श्रीमान् जगन्ति मदयन्नयनाभिरामः
कामोऽयमेति मदघूर्णितनेत्र पद्मः ॥

---

निधनविधाने निर्द्दयो विश्रुतः ख्यातः । अटष्टोरधारः शत्रुमारणाय चक्रतीक्ष्णधारः । राजन्यानामुन्नांशकूटस्य भुजमूलसमूहस्य क्रथने छेदने पटुः । विवेकेनेवेति । येन गोपालेन कर्णं राजानं निर्जित्य श्रीकीर्त्तिवर्म्मनृपतेरुदयः आधिपत्यं कृतः तत्र एकानेकेवशब्दादुपमाद्वैविध्यस्य दण्डिकारोक्तत्वादनेकेवशब्दैः प्रकृतार्थसूचिकामुपमामाह विवेकेनेवेति । येनेत्यत्र विवेकेनेवेत्युपमा । विवेकः प्रकृतप्रबन्धस्य नायकः स च विचार्य्योपनिषदर्थनिर्णयरूपः । कर्णमित्यत्रोपमा मोहमिवेति । ऊर्जितमिति कर्णमोहयोर्द्वयोरपि विशेषणम् । मोहस्य तत्वज्ञानविरोधित्वात् प्रकृतप्रबन्धप्रतिनायकः श्रीकीर्त्तिवर्म्मनृपतेरित्यत्रोपमा बोधस्येवेति बोधस्तत्वज्ञानं प्रकृतप्रबन्धसाध्यः । नासूचितस्य नाटके निवेश इति नियमात् अनन्तरं प्रवेक्ष्यतो विवेकस्य सूचनमिदम् । आः पापेति सूत्रधारमाक्षिपतः कामस्योक्तिः । शैलूषो नटः । प्रवेक्ष्यन्तं कामं सूचयति उत्तुङ्गेति । कामोऽयमेत्यागच्छति कीदृशः पुलकितेन भुजेन विशिष्टया रत्या उत्तुङ्गपीवरकुचद्वयपीड़िताङ्गं यथा स्यात्तथा आलिङ्गितः पीवरं पीनं श्रीमानित्यादि स्पष्टम् । प्रस्तावनेति । नटी विदूषको वापि पारिपार्श्व-

नूनं मद्वचनाच्चोपजातक्रोध इवासौ लक्ष्यते तदपसरणमेवास्माकमितः श्रेय [ इति निष्क्रान्तौ प्रस्तावना ]

ततः प्रविशति यथा निर्द्दिष्टः कामो रतिश्च ।

कामः । [सक्रोधं] आः पाप ! [इतिपठित्वा] नन्वरे ! भरताधम !

प्रभवति मनसि विवेको विदुषामपि शास्त्रसम्भवस्तावत् ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥

अपि च । रम्यं हर्म्म्यतलं नवाः सुनयनागुञ्जद्द्विरेफालताः
प्रोन्मीलन्नवमालिका सुरभयो वाताः सचन्द्राः क्षपाः ।
यद्येतानि जयन्ति हन्त ! परितः शस्त्राण्यमोघानि मे
तद्भोः ! कीदृगसौ विवेकविभवः कीदृक् प्रबोधोदयः ॥

रतिः । अज्जउत्त ! गुरुओ क्खु महाराअ महामोहस्स पड़िवक्खो विवेओ त्ति तक्केमि ।

कामः । प्रिये ! कुतस्त्वेदं स्त्रीस्वभावसुलभं विवेकाद्भय मुत्पन्नम् । पश्य ।

---

क एव वा । सूत्रधारेण सहिताः संलापं यत्तु कुर्वते । आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावना हि सा इति प्रस्तावनालक्षणम् । प्रभवतीति शास्त्रसंभवो विवेको विचार्य्यार्थनिर्णयः विदुषामपि मनसि तावत् प्रभवति यावदिन्दीवराक्षीणां नायिकानां दृष्टिरूपा मदीयविशिखा न निपतन्तीत्यर्थः। रम्यमिति । हन्त ! हर्षे मम अमोघानि एतान्यस्त्राणि यदि परितो जयन्ति उत्कर्षेण वर्त्तन्ते भोः शैलूष ! तत्तदासौ भवदुक्तोमहामोहपराभवरूपो विवेकविभवः कीदृक् प्रबोधचन्द्रोदयश्च कीदृक् सर्वथाऽलीक एवेत्यर्थः । अस्त्राण्येव दर्शयति रम्यमित्यादि हर्म्म्यं धनिनां विलक्षणमट्टं तस्य तलं भित्तिः नवा नवयौवनाः प्रोन्मीलन्त्या विकसन्त्या नवमालिकया सुरभयः सुगन्धयः । अज्जउत्तेति । आर्य्यपुत्र ! गुरुः खलु महाराजमहामोहस्य प्रतिपक्षो विवेक इति तर्कयामि ।

अपि यदि विशिखाः शरासनं वा कुसुममयंससुरासुरं तथापि ।
मम जगदखिलं वरोरु ! नाज्ञामिदमभिलङ्घ्य धृतिं मुहूर्त्तमेति ॥

तथा हि । अहल्यायाः जारः सुरपतिरभूदात्मतनयां
प्रजानाथोऽयासीदभजत गुरोरिन्दुरबलाम् ।
इति प्रायः को वा न पदमपदेऽकार्य्यत मया
श्रमो मद्बाणानां क इह भुवनोन्माथविधिषु ॥

रतिः । अज्जउत्त ! एवमेदं तधावि महासहाअसम्पण्णो सङ्किदव्वो अरादि जदो अस्स जमणिअमप्पमुहा अमच्चा सुणीअन्ति ।

कामः । प्रिये ! यानेतान् राज्ञो विवेकस्य बलवतो यमादीनष्टौ तावदमात्यान् पश्यसि त एते नियतमस्माभिरभियुक्तमा-

---

इति सं । आर्य्यपुत्रेति नाटके पतिसम्बोधनम् । अपि यदीति । कुसुममय-मित्यत्र लिङ्गवचनव्यत्यासेनान्वयः तथा च अपि सम्भावनायां हे वरोरु यदि कुसुममया विशिखाः कुसुममयं शरासनं वा मम वर्त्तते इति शेषः तथापि ससुरासुरमिदमखिलं जगत् ममाज्ञामभिलङ्घ्य धृतिं मुहूर्त्तमपि नैतीत्यर्थः । जगतामनैश्वर्य्यमेव दर्शयति तथा हीति । अहल्या गोतमस्य पत्नी जार उपनायकः आत्मतनयां सन्ध्यानाम्नीं प्रजानाथो ब्रह्मा अयासीदुपगतवान् गुरोर्वृहस्पतेरबलां कान्तां तारानाम्नीम् इन्दुरभजत उपगतवान् इत्यनेन प्रकारेण प्रायः को वा जनो मया अपदेऽस्थाने पदं व्यवसायं न अकार्य्यत अपि त्वकार्य्यत एव अतो भुवनोन्माथविधिषु इह जगति मद्बाणानां कः श्रम इत्यर्थः । पदं व्यवसितत्राणस्थानलक्ष्मवस्तुषु कीर्त्तितमिति कोषः । अज्जेति । आर्य्यपुत्र ! एवमेतत् तथापि महासहाय सम्पन्नः शङ्कितव्योऽरातिः यतोऽस्य यमनियमप्रमुखा अमात्याः श्रूयन्ते । इति सं । अमात्यानिति यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपानष्टावमात्यान् द्राक् शीघ्रं विघटिष्यन्ते पलायिष्यन्ते । यमादीनां विघटनं दर्शयितुं यत्तत्त्व एव! यमादिवत्समाद्यौ

द्यात्प्रागेव विघटिष्यन्ते तथा हि—

अहिंसा कैव कोपस्य ब्रह्मचर्य्यादयो मम ।
लोभस्य पुरतः केऽमी सत्यास्तेयापरिग्रहाः ॥

यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयस्तु निर्विकारचित्तैकसाध्यत्वादीषदङ्कुरसमुन्मलना एव अपि च स्त्रिय एवामीषां कृत्या स्तेन तेऽस्मद्गोचरा एव वर्त्तन्ते यतः

सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः ।
स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥

विशेषतस्त्वेते मदमानमात्सर्य्यदम्भलोभादिभिरस्मत्स्वामिवल्लभैरभियुज्यमाना नरपतिमन्त्रिणमधर्म्ममेवाश्रयिष्यन्ति ।

रतिः । अज्जउत्त ! सुदं मए तुम्हाणं समदमप्पहुदीणं अ एक्कम् उप्पत्तिट्ठाणं त्ति ।

---

तद्विघटनमेव दर्शयति तथा हि अहिंसेति । कोपस्य पुरत इत्येवं सर्वत्रैव पुरत इत्यस्यान्वयः ब्रह्मचर्य्यादय इत्यादिपदात् संन्यासतपस्यापरिग्रहः । अस्तेयोऽचौर्य्यं अपरिग्रहः अप्रतिग्रहः । चित्तविकारेणैव एषां विघटनं चित्तविकारसत्त्वे च सुतरां यमादीनां विघटनमित्याह यमनियमेति । यमो निषिद्धत्यागः नियमो व्रतम् आसनमुपवेशनप्रकारविशेषः प्राणायामः वायोः पूरककुम्भकरेचकरूपः प्रत्याहारः उपवासान्तरं नियताहारः ध्यानं भावना धारणा शिक्षितार्थाभ्यासः समाधिर्निश्चलचित्तता । कृत्या अभिचारोत्पन्नहिंस्रदेवतास्त्रिय एवैषां तादृशा इत्यर्थः । अस्मद्गोचरा एवेति स्त्रीणामस्मदधीनत्वेऽस्मत्प्रियाप्ता एवेत्यर्थः । सन्तु विलोकनेति । विलोकनादि सकलं पुंसः कामिनीविषयकं बोध्यम् । एते यमादयः नरपतिमन्त्रिणं अस्मन्नरपतिमहामोहमन्त्रिणं मदमानमात्सर्य्यादिवशात् अधर्म्मपथेनैव पुरुषार्थमाचरिष्यन्तीत्यर्थः । अज्जेति । आर्य्यपुत्र ! श्रुतं मया युष्माकं शमदमप्रभृतीनाञ्च एकमुत्पत्तिस्थानं इति । इति सं । उत्पत्तिस्थानं वंशः । सम्भूत

कामः । प्रिये ! किमुच्यते एकमुत्पत्तिस्थानमिति ननु जनक एवास्माकमभिन्नः तथा हि

सम्भूतः प्रथममिहेश्वरस्य सङ्गा-
न्मायायां मन इति विश्रुतस्तनूजः ।
त्रैलोक्यं सकलमिदं विसृज्य भूय-
स्तेनाथो जनितमिदं कुलद्वयं नः ॥

तस्य प्रवृत्तिनिवृत्ती द्वे धर्म्मपत्न्यौ तयोः प्रवृत्त्यामुत्पन्नं महामोहप्रधानमेकं कुलं निवृत्त्यामुत्पन्नं द्वितीयं विवेकप्रधानमिति ।

रतिः । अज्जउत्त ! जइ एवं ता किंत्ति सोअराणं तुह्माणं एआरिसं वेरम् ।

कामः । प्रिये ! एकामिषप्रभवमेव सहोदराणा-
मुज्जृम्भते जगति वैरमिति प्रसिद्धम् ।

---

इत्यादि । मनस उत्पत्तौ मायासहितमनःप्रभव एव संसार इति वेदान्तसिद्धान्तावष्टम्भेनेदम् । ईश्वरस्य सङ्गादित्यत्र ईश्वरस्य सिसृक्षाधीनमायाप्रेरणरूप एव मायाया ईश्वरसङ्गो बोध्यः । ईश्वरस्य परमात्मा तेनेति मनसोऽर्थः । अत एव तनोति विश्वमीशितुरीशितेरिना जगन्ति मायेश्वरतेयमीशितुरिति षष्ठाङ्के विवेकेनेश्वरसिसृक्षाप्रेरितया मायया जगत् सृष्टिरुक्ता न तु ईश्वरस्य शृङ्गाररूपात् सङ्गादित्यर्थः । पुंसः सङ्गसमुज्झितस्य गृहिणी मायेति तेनाप्यसावसृष्टापि मनः प्रसूय तनयं लोकानसूत क्रमादित्यत्र ईश्वरासृष्टमायया जगत्सृष्टिकथनविरोधापत्तेः । परन्तु तेनैव मायान सृज्यते अविद्यादशायान्तु मायया स सृज्यते विमोह्यते च अतएवाग्रे स्वमपि यदयं मायासङ्गात् पुमानिति विस्मृत इति विवेकस्योक्तिः । अज्ज ेति । आर्य्यपुत्र ! यद्येवं तत् कथं सोदराणां युष्माकं ईदृशं वैरम् । इति सं । एकामिषमिति । आमिषं भोग्यद्रव्यं उज्जृम्भते वर्द्धते स्पष्टमन्यत् । सन्तं पापमिति । शान्तं पापं आर्य्य-

पृथ्वी निमित्तमभवत् कुरुपाण्डवानां,
तीव्रस्तथा हि भुवनत्रयकृद्विरोधः ॥

सर्व्वमेव चतज्जगदस्माकं पितृपार्ज्जितं तच्चास्माभिस्तातवल्लभतया सर्व्वमेवाक्रान्तं तेषान्तु विरलप्रचारः तेन ते पापाः पितरमस्मांश्चोन्मूलयितुमुद्यताः ।

रतिः । [कर्णौ पिधाय] सन्तं पावं अज्जउत्त ! किं एदं पावं विद्दे समत्तकेणज्जेव तेहिं आरद्धं अधवा भोदु एत्थ को उवाओ मन्तिदव्वो ।

कामः । प्रिये ! अस्त्यत्र किञ्चिन्निगूढं वीजम् ।

रतिः । अज्जउत्त ! ता किं ण उग्घाड़ीअदि ।

कामः । प्रिये ! स्त्रीस्वभावाद्भवती भीरुरिति न तत् दारुणं कर्म्म पापीयसामुदाक्रियते ।

रतिः । [सभयम्] अज्जउत्त ! केरिसं तम् ।

कामः । प्रिये ! न भेतव्यं हताशानामाशामात्रमेवैतत् अस्ति किलैषा किम्वदन्ती अत्रास्माकं कुले कालरात्रिकल्पा विद्या नाम राक्षसी समुत्पत्स्यत इति ।

रतिः । हद्धी ! कधं तुम्हाणं कुले रक्खसी त्ति? वेवदि मे हिअअम् ।

कामः । प्रिये ! किंवदन्तीमात्रमेतत् ।

---

पुत्र ! किमेतत् पापं विद्वेषमात्रेणैव तैरारब्धं अथवा भवतु अत्र क उपायो मन्त्रयितव्यः । इतिसं । शान्तं पापमित्यत्र शान्तमस्त्राव्यमित्यर्थः । अज्जेति आर्य्यपुत्र तत् किं नोद्घाट्यते । इति सं । नोद्घाट्यते न प्रकाश्यते । अज्जेति आर्य्यपुत्र कोदृशं तत् । इतिसं । किंवदन्ती जनश्रुतिः । हद्धीति हा

रतिः । अथ ताए रक्खसीए उप्पण्णाए किं कादव्वम् ।

कामः । प्रिये ! अस्ति किल तत्र प्राजापत्या सरस्वती यथा

पुंसः सङ्गसमुज्झितस्य गृहिणी मायेति तेनाप्यसा-
वस्पृष्टापि मनः प्रसूय तनयं लोकानसूत क्रमात् ।
तस्मादेव जनिष्यते पुनरसौ विद्येति कन्या यया
तातस्ते च सहोदराश्च जननी सर्व्वञ्च भक्ष्यं कुलम् ॥

रतिः । [ सत्रासोत्कम्पम् ] अज्जउत्त ! परित्ताहि परित्ताहि ।

[ इति भर्त्तारमालिङ्गति ] ।

---

धिक् कथं युष्माकं कुले राक्षसीति वेपते मे हृदयम् । इति सं । अथ इति । अथ तया राक्षस्या उत्पन्नया किं कर्त्तव्यम् । इति सं । प्रजापत्या ब्राह्मी सरस्वती आकाशवाणीरूपा । पुंस इत्यादि पुंस आदिपुरुषस्य सङ्गसमुज्झितस्य स्वभावतो मायासङ्गसमुज्झितस्य अतएव तेनास्पृष्टापीति । लोकानसूतेति स्वसाहाय्यात्मनाद्वारेति शेषः । तेन संभूतः प्रथममिहेत्यादिना मनसा त्रैलोक्यसर्जनकथनं न विरुद्धं तनोति विश्वमीशितुरीश्वितारिते जगन्ति मायेश्वरतेयमीशितुरिति षष्ठाङ्कोक्तिरप्युपपन्ना अन्यथा अत्र मनसा जगत्सर्ज्जनं षष्ठाङ्के मायया जगत्सर्ज्जनमनुपपन्नं स्यात् । तस्मादेवेति तस्मान्मनस उपनिषद्देव्युदरे इति शेषः । मनसा तदुत्पादनञ्च स्वपुत्रविवेकद्वारेति बोद्धव्यं, अतएवाङ्के विवेकेनोपनिषद्देव्यां प्रबोधचन्द्रेण भ्रात्रा सह जनयितव्येति विद्योत्पत्तेर्वक्ष्यमाणत्वाद्वक्ष्यति च षष्ठाङ्के देवतानां संकल्पयोनित्वात् उपनिषद्देव्या सहालापेन संकल्पवशादेव तदुदरे विद्याप्रबोधौ विवेकात्-गर्भस्थौ भविष्यतः संकर्षविद्यया च निदिध्यासनेन विद्या मनसि संक्रामयिष्यते प्रबोधस्त्वादिपुरुषे इति एवञ्च संक्रान्तिवशान्मनोऽपि विद्यायास्तातः महामोहविवेकादयश्च सहोदराः कामक्रोधादयश्च कुलं एतत् सर्व्वं तया भक्ष्यमित्याह यया तातस्तेत्यादि । जननी उपनिषद्देवी मायातु कुलान्तर्गतत्वेनैवोक्ता । अज्जेति आर्य्यपुत्र ! परित्राहि परित्राहि । इति सं ।

कामः । [ स्पर्शसुखमभिनीय, स्वगतम् ] ।

स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो
भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः ।
अधीराक्ष्या गुञ्जन्मणिवलयदोर्व्वल्लिरचितः
परीरम्भो मोदं जनयति च सम्मोहयति च ॥

[ प्रकाशं दृढं परिष्वज्य ]

प्रिये ! न भेतव्यं अस्मासु जीवत्सु कुतो विद्योत्पत्तिः ?

रतिः । अज्जउत्त ! अध किं ताए रक्खसीए उप्पत्ती तुह्माणं पड़िवक्खाणं सम्मदा ।

कामः । वाढं सा खलु विवेकेनोपनिषद्देव्यां प्रबोधचन्द्रेण भ्राचा सम जनयितव्या, तत्र चैत सर्व्वं एव शमदमादयः प्रति-प्रयोगाः ।

रतिः । अज्जउत्त ! कधं उण अप्पणो विणास आरिणीए विज्जाए उप्पत्ती तेहिं दुव्विणीदेहिं सलाहणिज्जइ ।

---

स्वगतमिति नाटके मनः कथायाम् स्वगतमात्मगतमिति प्रयुज्यते तथा च मनसा कथयन्नो[illegible] सम्मोहयति च परीरम्भः कीदृशः स्फुरन् अर्थान्मम रोमोद्भेदो रोमाञ्चो यस्मात्तादृशः। अधीराक्ष्याः कीदृश्याः तरलतरया तारया चक्षुः कनीनिकया आकुलदृशः । परीरम्भः पुनः कीदृशः भयेनोतकम्पो य उत्तुङ्गस्तनयुगभरः गुरुतरस्तनयुगं तदासङ्गेन सुभगः । प्रकाशमिति मनः कथामन्तरं प्रकाशं ब्रवीतीत्यर्थः । अज्जेति आर्य्यपुत्र ! अथ किं तस्या राक्षस्या उत्पत्तिर्युष्माकं प्रतिपक्षाणां सम्मता । इति सं । वाढ-मित्यभ्युपगमे तेषां सम्मतैवेत्यर्थः । अज्जेति आय्यपुत्र कथं पुनरात्मनो-विनाशकारिण्या विद्याया उत्पत्तिस्तैर्दुर्विनीतैः स्लाघ्यते । इति सं ।

काम: । प्रिये ! कुलक्षयप्रवृत्तानां पापकारिणां कुतः स्वप्रत्यवायगणना । पश्य ।

सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः ।
जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनुप्रयाति नाशम् ॥

[ नेपथ्ये ] आः ! पाप ! दुरात्मन् ! कथमस्मानेव पापकारिण इत्याक्षिपसि नन्वरे !

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥

इति पौराणिकीं गाथां पुराविद उदाहरन्ति ।

अनेन चास्माकं जनकेनाहङ्कारानुवर्त्तिना जगत्पतिः पितैव

---

स्व प्रत्यवायः स्वानिष्टम् । सहजेति । द्वन्द्वस्थयोर्मलिनवक्रपदयोरुत्तरवर्त्तिभावपदस्योभयत्र सम्बन्धः तथा च स्वभावतो मलिनभाववक्रभाव भाजां जनानां भव उत्पत्तिस्तदीयप्रभवस्य जनकस्य आत्मनस्च नाश-हेतुर्भवति । तथा च विवेकादयोऽपि स्वभावतो मलिनभावावक्रभावास्च स्वजनकं स्वञ्च नाशयिष्यन्त तथा च का[illegible]ः । धू[illegible]ति । जलधरपदवीं जलधरत्वम् । इति । ज्वलनविनाश मनु ज्वलनविनाशस्य पश्चादित्यर्थः । प्रयाति नाशमिति तृष्ण्यनन्तरं मेघनाशात् । धूमस्यापि मलिनभाववक्रभावौ प्रत्यक्षसिद्धौ बोध्यौ । तातादिवधकारिण्या विद्याया उत्पत्तिरस्माभिरिष्यते दुर्विनीततानाशायेत्यतः कथमस्मानाक्षिपसि उचितार्थप्रवृत्तत्वादित्याह नन्वरे इति । गुरोरपि न्याय्यो दण्डो विधीयत इत्यन्वयः । अवलिप्तस्य कलङ्किनः उत्पथं धर्मविरोधिपथम् । तदेवावलिप्तत्वादिकं मनसि दर्शयति अनेन चेत्यादि । अनेन मनसा अहङ्कारानुवर्त्तिना अहङ्काररूपपाशसहायेन पिता परमात्मा । अहं गौर इत्यादि बुद्धिरहङ्कारः तेन बद्धः सम्बद्ध इत्यर्थः

तावत्प्रबद्धः महामोहादिभिश्च स एव बद्धः सुदृढ़तां नीतः ।

काम: । [ विलोक्य ] प्रिये! अयमस्माकं कुलज्यायान् देव्या मत्या सह विवेक इत एवाभिवर्त्तते य एषः ।

रागादिभिः स्वसहचारिभिरात्तकान्ति
निर्भर्त्स्यमान इव मानधनः कृशाङ्गः ।
मत्या नितान्तकलुषीकृतया शशाङ्कः
कान्त्येव सान्द्रतुहिनान्तरितो विभाति ॥

तन्न युक्तमस्माकमिह स्थातुम् [इति निष्क्रान्तौ] । विष्कम्भकः ।

[ ततः प्रविशति राजा विवेको मतिश्च ]

राजा । प्रिये ! श्रुतं त्वया अस्य दुर्व्विनीतस्य वटोर्म्मद-विस्फूर्जितं वचः यदयमस्मानेव पापकारिण इत्याक्षिपति ।

मतिः । अज्जउत्त! किं अप्पणो दोसो लोयो विजाणादि ।

---

द्वितीयाङ्के दम्भाश्रमं प्रवेक्ष्यन्नहङ्कारस्तु स्वस्य सर्व्वाधिक्यबुद्धिरूपोऽवधेयः। कुलज्यायान् कुलश्रेष्ठः । देव्या मत्येति सम्मतेत्यर्थः । प्रवेक्ष्यतो विवेकस्यावस्थां सूचयति । रागादिभिरिति । य एष मत्या सह विभातीत्यन्वयः । कीदृश्या मत्या नितान्तकलुषीकृतया महामोहप्रभावेण विरलप्रचारत्वान्नितान्तदुःखितयेत्यर्थः । यः कीदृशः स्वसहचारिभी रागादिभिरात्तकान्तिः शोभित इत्यर्थः । रागश्चात्र सुमत्यनुरागः विषयरागव्यावर्त्तनाय स्वसहेति । आदिपदात् यमनियमादिपरिग्रहः । पुनः कीदृशः कृशाङ्गः महामोहाभिभवादिति बोध्यम् । तत्र दृष्टान्तमाह निर्भर्त्स्येति । केनचित्तर्ज्जयमाणो मानधनो मानीजनइव कृशाङ्ग इत्यर्थः ।। विष्कम्भक इति ।। वृत्तोऽपि स्वेच्छया प्राप्ताः संलापं यत्र कुर्वते । विष्कम्भकः स विज्ञेयः कथामात्रस्य सूचकः। जनद्वयप्रयोज्यश्चेत् स एव स्यात् प्रवेशक इति तल्लक्षणम् । राजा विवेकः विस्फूर्ज्जितं व्यापकता। अज्जेति । आर्य्यपुत्र ! किमात्मनो दोषं लोको विजानाति । इति सं । न जानात्येवेत्यर्थः ।

राजा । पश्य ।

असावहङ्कारपरैर्दुरात्मभिर्निबध्य तैः पाशशतैर्मदादिभिः ।
चिरं चिरानन्दमयो निरञ्जनो जगत्पतिर्दीनदशामनीयत ॥

त एते पुण्यकारिणो वयन्तु तन्मुक्तये प्रवृत्ताः पापकारिण इत्यहो जितं दुरात्मभिः ।

मतिः । अज्जउत्त ! जदो सो सहजाणन्दसुन्दरसहावो णिच्चप्पआसस्फुरन्तसअलतिहुअणप्पहावो परमेसरो सुणीअदि ता कधं एदेहिं दुब्बिणीदेहिं बन्धिअ महामोहसाअरे णिक्खित्तो ।

राजा । प्रिये !

सततधृतिरप्युच्चैःशान्तोऽप्यवाप्तमहोदयो-
ऽप्यधिगतनयोऽप्यन्तः स्वच्छोऽप्युदीरितधीरपि ।
त्यजति सहजं धैर्य्यं स्त्रीभिः प्रतारितमानसः
स्वमपि यदयं मायासङ्गात् पुमानिति विस्मृतः ॥

---

असाविति । असौ जगत्प्रभुरादिपुरुषश्चिदानन्दमयः चिज्ज्ञानं तत्स्वरूपानन्दात्मको निरञ्जनो निर्लेपः पापादिलेपरहित इत्यर्थः । दुरात्मभिस्तैः प्रसिद्धैर्मदादिभिः पाशशतैर्निबध्य दीनदशामनीयत प्रापितः । मदादिभिः कीदृशैः अहङ्कारपरैः अहङ्कारप्रधानपाशैरित्यर्थः । शरीरसम्बन्धाहङ्कारादि पाशबद्धो दुःखभागी कृत इत्यर्थः । जितमित्युपहासेनोत्कर्षकथनम् । अज्जेति । आर्य्यपुत्र ! यतोऽसौ सहजानन्दसुन्दरस्वभावो नित्यप्रकाशस्फुरत् सकलत्रिभुवन प्रभावः परमेश्वरः श्रूयते तत् कथमेतैर्दुर्विनीतैर्बद्धा महामोहसागरे निक्षिप्तः । इति सं । स्फुरन् सकलत्रिभुवने प्रभावो यस्य तादृशश्चासौ नित्यप्रकाशश्चेति कर्म्मधारयः । सततधृतिरपीति । स्त्रीभिः प्रतारितमानसो जनः सतत धृत्यादिविशिष्टोऽपि सहजं धैर्य्यं त्यजति महोदयो महाधिपत्यं ईश्वरस्य तु मायाप्रेरणाज्जगत्कर्त्तृत्वमेव तद्दधाति च ।

मतिः। अज्जउत्त! णं अन्धआरलेहाए सहस्सरस्सिणो तिरक्कारो जं माआए तधा स्फुरन्तमहाप्पआससाअरस्स देवस्स अहिहवो।

राजा। प्रिये! अविचारसिद्धेयं वेश्यविलासिनीव मायाऽसतोऽपि भावानुपदर्शयन्ती परपुरुषं वञ्चयति। पश्य।

स्फटिकमणिवद्भास्वान् देवः प्रगाढमनार्य्यया
विकृतिमनया नीतः काममसङ्गतविक्रियः।
न खलु तदुपश्लेषादस्य व्यपैति रुचिर्म्मनाक्
प्रभवति तथाप्येषा पुंसो विधातुमधीरताम्॥

---

तनोतीति विश्वेशितुरीशितेरिता जगन्ति मायेश्वरतेयमीशितुरिति। नयोनीतिः अन्तःस्वच्छोऽकुटिलः ईश्वरस्य तु निर्लेपत्वमेवान्तःस्वच्छत्वं उदीरितधीत्वमुत्कटबुद्धित्वमीश्वरस्य तु सर्वज्ञत्वमेव तत्। तस्येश्वरस्य कया स्त्रिया प्रतारणमित्यत आह स्वमपीति। अहं निर्गुणो निर्लेपः पुमानित्येवं स्वं यन्मायारूपस्त्रीसङ्गाद्विस्मृत इत्यर्थः। मायासङ्गश्चाविद्यादशायामेवेत्युक्तं प्राक्। तथा च मायासङ्गादेवाहङ्कारादि बद्धोऽभूदित्यर्थः। अहङ्कारश्च अहं गौर इत्यादि ज्ञानमित्युक्तं प्राक्। अज्जेति आर्य्यपुत्र! नूनमन्धकारलेखया सहस्ररश्मेस्तिरस्कारः यन्मायया तथा स्फुरन्महाप्रकाशसागरस्यापि देवस्याभिभवः। इति सं। अविचारसिद्धा विचारागम्या परपुरुषप्रतारणे वेश्यविलासिनीति दृष्टान्तः। तत्र मायापक्षेऽसतोऽलीकान् भावान् पदार्थान् परपुरुषं प्रधानपुरुषं वेश्यविलासिनी पक्षेऽयुक्तान् हेलालीलादि भावान् परपुरुषं स्वापरिणेतृपुरुषम्। मायया आदिपुरुषवञ्चनं दर्शयति पश्येति। असङ्गतविक्रियः स्वभावतोऽप्राप्तविक्रियो देवः स्फटिकमणिवद्भास्वान् दीप्यमानोऽनया नार्य्यया मायया प्रगाढं विकृतिं नीतः। तस्य निर्लेपदीप्यमानतारूपा रुचिर्म्मायया नाशयितुं न शक्यत एव तथाप्यविद्यादशायां तयाभिभूयत इत्याह न खल्विति। मनागल्पमपि अस्य तादृशी रुचिर्न नश्यति तथाप्यविद्या साहाय्यादेषाऽस्याधीरतां विधातुं प्रभवतीत्यर्थः।

मतिः। किं उण कारणं जेण सा तधा उदारचरिदं दुव्विअट्ठाप्पआरेदि।

राजा। न खलु प्रयोजनं कारणं वा विलोक्य माया प्रवर्त्तते स्वभाव: खल्वयं स्त्रीपिशाचीनाम्। यथा

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
विक्षोभयन्ति रमयन्ति विषादयन्ति।
एता: प्रविश्य हृदयं सदयं नराणाम्
किन्नाम वामनयना न समाचरन्ति॥

अस्ति चापरमपि कारणम्।

मतिः। अज्ज उत्त! किं णाम तं कारणम्।

राजा। एवमनया दुराचारया चिन्तितम् अहं तावद्गतयौवना वर्षीयसी अयञ्च पुराण: पुरुष: स्वभावादेव विषयरसविमुख: अत: स्वतनयमेव पारमेश्वरपदे निवेशयामीति तमेव च मातुरभिप्रायं विदित्वा नितान्तप्रत्यासन्नतया तद्रूपमिवापन्नेन मनसा नवद्वाराणि पुराणि रचयित्वा

किं उणेति। किं पुनः कारणं येन सा तथोदारचरितं दुर्विदग्धा प्रतारयति। इति सं। सम्मोहयन्तीति। सन् वर्त्तमानोऽयः शुभावहोऽविधिर्यत्र तत् सदयं तादृशं नराणां हृदयं प्रविश्य एताः स्त्रीपिशाच्यः सम्मोहयन्तीत्यादि तत्र सम्मोहनं ज्ञानहानिः। मदनं हर्षजननम्। विडम्बनं नानादुर्गतिं प्रापणम्। विक्षोभणं चञ्चलीकरणम्। रमणं क्रीड़ा। विषादो दुःखविशेषः। स्त्रीप्राप्त्यप्राप्तिदशाभेदेनैतानि बोध्यानि। अज्जेति आर्य्य पुत्र! किं नाम तत् कारणम्। इति सं। स्वतनयं मनः पारमेश्वरपदं जगदाधिपत्यं नितान्तप्रत्यासन्नत्वं परमात्मन्यत्यन्तसान्निध्यं तद्रूपमिव तदभिन्नमिव नवद्वाराणि पुराणि नवच्छिद्रविशिष्ट-

एकोऽपि बहुधा तेषु विच्छिद्येव निवेशितः।
स्वचेष्टितमथो तस्मिन् विदधाति मणाविव ॥

मतिः। यादिसो मादा पुत्तो वि तारिसो ज्जेव जादो।

राजा। ततोऽसावहङ्कारेण चित्तस्य ज्येष्ठपुत्रेण नप्त्रा परिष्वक्तः।

जातोऽहं जनको ममैष जननी चेत्रं कलत्रं कुलं
पुत्रामित्रमरातयो वसु बलं विद्यासुहृद्बान्धवाः।
चित्तस्पन्दितकल्पनामनुभवन् मायामविद्यामयीं
निद्रामेत्य विघूर्णितो बहुविधान् स्वप्नानिमान् पश्यति ॥

मतिः। अज्जउत्त ! एवं दीहदीहदरणिद्दाविद्दाविप्पबोहे

---

शरीररूपाणि। एकोऽपीति। बहुधा विच्छिद्येव तेषु निवेशित इत्यर्थः। ...च्छन्नप्रायता च तत्तच्छरीरभेदेन तस्य भिन्नत्वबहुत्वोत्पादः। अथो पुरेषु निवेशनानन्तरं तन्मनस्तस्मिन्नादिपुरुषे स्वचेष्टितं विदधाति ... यद्यत्करोति तत्तदेव स एव करोतीति दर्शयतीत्यर्थः। वस्तुतस्तु निष्क्रियत्वात् अत्र दृष्टान्तमाह मणाविवेति स्वच्छमणिप्रविष्टप्रतिबिम्ब इवेत्यर्थः प्रतिबिम्बप्रतियोगी पुरुषो यथा मणिप्रविष्टे स्वप्रतिबिम्बे स्वक्रियां दर्शयति तद्वदित्यर्थः। यादिसीति। यादृशी माता पुत्रोऽपि तादृश एव जातः। इतिशं। नप्त्रा पौत्रेण परिष्वक्तः सन् बहुविधान् स्वप्नान् पश्यतीति लिङ्गवचनव्यत्ययेन जनन्यादौ सर्वत्रान्वयः ... ममैष इत्यत्र, एष इत्यस्य सैन्यं सुहृत् स्वप्रीतिविषयः स्वस्मिन् प्रीतिमांश्च मित्रन्तु स्वकार्य्यसहायः बान्धवाः कुटुम्बाः स्वप्नान् पश्यति कीदृशः सन् अविद्यामयीं निद्रामेत्य विघूर्णितः सन् मायामनुभवन् प्राप्नुवन् मायापरिष्वक्तो भवन्निति यावत्। मायां कीदृशीं चित्तेन मनसा स्पन्दिता जनिता कल्पना प्रेरणा यस्यां तादृशीं ममोऽधीनया मायाप्रेरणया विशिष्टः सन्नित्यर्थः। अज्जेति आर्य्यपुत्र! एवं दीर्घदीर्घतरनिद्राविद्रावित प्रबोधे परमेश्वरे कथं प्रबोधोत्पत्ति-

परमेसरे कधं प्पबोह उप्पत्ती भविस्सदि ।

राजा । [ स लज्जमधोमुखस्तिष्ठति ] ।

मतिः । अज्जउत्त ! किंत्ति गुरुअरलज्जाभरणमिदमुहो तूह्णीं भूदो सि ।

राजा । प्रिये ! सेर्ष्यं प्रायेण योषितां हृदयं भवति तेन सापराधमिवात्मानं शङ्के ।

मतिः । अण्णाअ ताओ इत्थिआओ जाओ सरसप्पवत्तस्स धम्मवावारपत्थिदस्स वा भत्तुणो हिअअट्ठिदं विहडेन्ति ।

राजा । प्रिये !

मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवे-
च्छान्त्यादेरनुकूलनादुपनिषद्देव्या मया सङ्गमः ।
तूष्णीञ्चेद्विषयानपास्य भवति तिष्ठेन्मुहूर्त्तं ततो

---

भविष्यति । इतिसं । अज्जेति आर्य्यपुत्र ! किमिति लज्जाभरनमित मुख-स्तूष्णीम्भूतोऽसि । इतिसं । सेर्ष्यं स्वपत्यामीर्ष्यायुक्तम् । अज्जेति अन्या-स्ताः स्त्रियः याः सरसप्रवृत्तस्य धर्म्मव्यापारप्रस्थितस्य वा भर्त्तुर्हृदय-स्थितं विघटयन्ति । इतिसं । स्त्रियामित्यिया इविप्रयोगेण जनितया [illegible] अयस्तूयया आकुलाया मानिन्या उपनिषद्देव्याः शान्त्यादेरनुकूलान्मया सह सङ्गमश्चेत्भवेत् विषयानपास्य भवती मुहूर्त्तं तूष्णीं चेत्तिष्ठेत् जाग्र-द्दशायामेव स्वप्नः सएव सुषुप्तिधाम सुषुप्तिपदाश्रयः सुषुप्तिपदशाच्य इति यावत् तद्विरहात् प्रबोधोदयः प्राप्तःप्रायइत्यर्थः पुरुषेणेति शेषः । शान्त्या-देरित्यादि पदात् श्रद्धापरिग्रह अनुकूलनादनुनयात् । परमात्मस्वरूप-प्रतिपादको वेदस्य भागविशेष उपनिषत् । विषयापासेन मतेस्तूष्णींस्थिति-

जाग्रत्स्वप्नसुषुप्तिधामविरहात् प्राप्तः प्रबोधोदयः॥

मतिः। अज्जउत्त! जइ एवं कुलप्पहुणो द्दढगण्ठिबद्धस्स बन्धमोक्खो भोदि तदो एदाए णिच्चाणुबन्धो ज्जेव भोदू त्ति सुट्ठु मे पियम्।

राजा। प्रिये! यद्येवं प्रसन्नासि तत् सिद्धास्माकं मनोरथाः तथा हि—

बद्धैको बहुधा विभज्य जगतामादिः प्रभुः शाश्वतः
क्षिप्ता यैः पुरुषः पुरेषु परमो मृत्योः पदं प्रापितः।
तेषां ब्रह्मभिदां विधाय विधिवत् प्राणान्तिकं विद्यया
प्रायश्चित्तमिदं मया पुनरसौ ब्रह्मैकतां नीयते॥

तद्भवतु प्रस्तुतविधानाय शमदमादीन्नियोजयामि [इति निष्क्रान्तौ]। इति संसारावतारो नाम प्रथमोऽङ्कः।

---

द्वैताद्याक्षिप्तम्। प्रबोधोदयस्तत्त्वज्ञानोत्पत्तिः। अज्जेति। आर्य्यपुत्र! यद्येवं कुलप्रभोर्दृढग्रन्थिबद्धस्य बन्धमोक्षो भवति तदा एतया नित्यानुबन्धएव भवतु इति सुष्ठु मे प्रियम्। इतिशं। कुलप्रभोः परमात्मनः एतया उपनिषद्देव्या सह भवत्वित्यत्र भवाविति शेषः सुष्ठु शोभनम्। बद्धैक इति यैरहङ्कारादिभिरेकः परमः शाश्वतो नित्यो जगतामादिः प्रभुर्बद्ध्वा पुरेषु शरीररूपेषु बहुधा विभज्य क्षिप्ता मृत्योर्यमस्य पदमधिकाररूपं व्यवस्थितिं प्रापितः ब्रह्मभिदां परमात्मस्वरूपब्रह्मभेदकानां तेषां प्राणान्तिकं प्रायश्चित्तं विद्यया द्वारभूतया विधाय पुनरसौ मया ब्रह्मैकतां नीयत इत्यन्वयः। अन्येषामपि ब्रह्मभिदां ब्राह्मणहन्तॄणां स्मृतिविद्यया उपदेष्ट्रा प्राणान्तिकं प्रायश्चित्तं राज्ञा विधीयतइति श्लेषादत्र तथात्वारोपः। इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां प्रबोधचन्द्रोदयनामनाटकटीकायां प्रथमाङ्कविवरणम्।

---

# द्वितीयोऽङ्कः ।

[ ततः प्रविशति दम्भः ]

दम्भः । आदिष्टोऽस्मि महाराजमहामोहेन यथा प्रतिज्ञातं सामात्येन विवेकेन प्रबोधचन्द्रोदयाय प्रेषिताश्च तेषु तेषु तीर्थेषु शमदमादयः स चायमस्माकमुपस्थितः कुलक्षयः श्रीमद्भिर्भवद्भिरवहितैः प्रतिकर्त्तव्यः तत्र पृथिव्यां परमं मुक्तिक्षेत्रं वाराणसी नाम नगरी तद्भवांस्तत्र गत्वा चतुर्णामप्याश्रमाणां निःश्रेयसविघ्नाय प्रयततामिति तदिदानीं वशीकृतभूयिष्ठा मया वाराणसी नाम नगरी सम्पादितनिर्द्दिष्टश्च स्वामिनो यथा निर्द्देशः तथा हि मदधिष्ठितैरिदानीम् ।

वेश्यावेश्मसु सीधुगन्धिललनावक्त्रासवामोदितै-
र्नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरात् प्राप्ताग्निहोत्रा इति

---

अङ्कादौ प्रवेशः कश्चिदसूचितस्यापि भवतीत्यसूचीतस्यापि दम्भस्य प्रवेशः । प्रतिज्ञातमित्यादिप्रयततामित्यन्तोमहामोहस्यादेशः । निष्पादिततदादेशस्य वाराणस्यां कृताश्रमस्योपविष्टस्य दम्भोस्योक्तिस्तदिदानीमित्यादिवृत्तान्तमनुसरिष्यामीत्यन्ता । परप्रतारणार्थमलीकस्योत्कर्षप्रदर्शनं दम्भः । वशीकृतभूयिष्ठा दाम्भिकीकृतानेकधार्म्मिकजना । वेश्येति । मदधिष्ठितैर्धूर्त्तैर्धूर्त्ततां प्रापितैः वेश्यावेश्मसु निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्रा जाज्वल्यमानचन्द्राः क्षपारात्री नीत्वा दिवा सर्व्वज्ञा वय-

ब्रह्मज्ञा इति तापसा इति दिवा धूर्त्तैर्जगद्वञ्च्यते ॥

[ विलोक्य ] कोऽप्ययं पान्थो भागीरथीमुत्तीर्य्य साम्प्रतमित एवाभिवर्त्तते यथा चायम्

ज्वलन्निवाभिमानेन ग्रसन्निव जगत्त्रयम्।
भर्त्सयन्निव वाग्जालैः प्रश्रयोपहसन्निव ॥

तथा तर्कयामि नूनमयं दक्षिणराढ़ाप्रदेशादागतो भविष्यति। तदेतस्मादार्य्यस्य पितामहस्याहङ्कारस्य वृत्तान्तमनुसरिष्यामि।

[ ततः प्रविशत्यहङ्कारः। ]

अहं। अहो! मूर्खबहुलं जगत् तथा हि—
नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनं
तत्त्वं ज्ञातमहो! न शालिकगिरां वाचस्पतेः का कथा।
सूक्तं नैव महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा नृपशुभिः सुस्थैः कथं स्थीयते ॥

मित्यादिप्रदर्शनात् जगद्वञ्च्यते प्रतार्य्यते मन्मथोत्सवरसैः कीदृशैः सीधुगन्धिभिर्मधुगन्धिभिः वेश्याकपोलचुम्बनाद्यङ्गासवैर्व्वङ्गमदिराभिरामोदितैरभिनन्दितैः ज्ञापितैरिति यावत्। दीक्षितास्तहीत अतश्चिराच्चिरकालं व्याप्य चिरादित्यस्याव्ययत्वात्। ज्वलन्निवेति स्पष्टम्। ततः प्रविशत्यहङ्कार इति। स्वस्मिन् सर्व्वाधिक्यज्ञानमहङ्कारः। नैवाश्रावीति। नृपशुभिः समस्तनररूपैः पशुभिः कथं सुस्थैः स्थीयते यतो गुरोः प्रसिद्धमीमांसकस्य मतं नैवाश्रावि नैव श्रुतं तौतातिकं तुतातभट्टकृतं दर्शनं न विदितं न ज्ञातं अहो शालिकनाम्नो-ग्रन्थकारस्य गिरां तत्त्वं न ज्ञातं वाचस्पतेर्गिरां ज्ञानस्य का कथा सर्व्वथैव तज्ज्ञानं न जातमित्यर्थः। महोदधेर्महोदधिनामदर्शनस्य सूक्तं शोभनसूक्तं नाधिगतं न ज्ञातं महाव्रती यज्ञमीमांसा नेक्षिता। नन्वेतदज्ञाने का क्षतिरित्याह सूक्ष्मेति। वस्तुविचारणा तत्त्वज्ञाननिरूपणं सूक्ष्मा

[ विलोक्य ] एते तावदर्थावधारणविधुराः स्वाध्यायाध्ययनमात्रनिरता वेदविप्लावका एव [ पुनरन्यतो गत्वा ] एते च भिक्षामात्रार्थं गृहीतयतिव्रता मुण्डितमुण्डाः पण्डितम्मन्या वेदान्तशास्त्रं व्याकुलयन्ति [ विहस्य ]

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥

तदेतैः सह वाङ्मिश्रणमपि गुरुतरदुरितोदयाय

[ पुनरन्यतो गत्वा ] एते च शैवपाशुपतादयो दुरभ्यस्ताक्षपादमताः पशवः पाषण्डा एवामीषां सन्दर्शनादपि नरा नरकं प्रयान्ति तदेते दर्शनपथाद्दूरं परिहरणीयाः [ पुनरन्यतो गत्वा ]

एते च । गङ्गातीरतरङ्गसङ्गतशिलाविन्यस्तभास्वद्दृषी
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः ।
पर्य्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजग्रह

---

शास्त्रज्ञानं विनाऽशक्येत्यर्थः । वेदान्तशास्त्रं व्याकुलयन्तीति अर्थानवबोधादिति भावः । अथच्छास्त्रस्य वेदान्तस्य ज्ञानमप्यनपेक्षणीयमित्यभिप्रायेण विहस्याह प्रत्यक्षादीति । प्रत्यक्षादि प्रमाप्रमाणचतुष्टयाधीनं ज्ञानं तत्सिद्धस्य तद्गृहीतार्थस्य विपरीतार्थाभिधायिनः प्रतिपादका वेदान्ता यदि शास्त्राणि तदा नास्तिकशास्त्रत्वेन निन्दितैर्बौद्धैर्बौद्धशास्त्रैः किमपराध्यत इत्यर्थः । त्वमहमित्यादिप्रतीत्या गृहीतानां विभिन्नात्मनामभेदो घटपटादिपदार्थासत्यत्वञ्च प्रत्यक्षादि प्रमाविषयविरुद्धोऽर्थो वेदान्तैरभिधीयते । अक्षपादः शैवपाशुपतसूत्रप्रन्थकर्त्ता । अक्षमालां जपतो दृष्ट्वाह गङ्गातीरेति । अहो ! एते दाम्भिका धनिनां वित्तानि हरन्ति दिवा प्रतिग्रहेण रात्रौ चौर्य्येणेति शेषः । कीदृशाः गङ्गातीरे यास्तरङ्गसङ्गतशिलास्तत्र विन्यस्तासु भास्वद्दृषीषु संविष्टाः । यतिनामासनं दृषीति । कुशमुष्टीति महादण्डसङ्कुशमुष्टय इत्यर्थः । करण्डः कमण्डलुः । पर्य्यायग्रथितं

अग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो ! दाम्भिकाः ॥ [ पुनरन्यतो गत्वा ] एते च शिरदण्डोपजीविनो द्वैताद्वैतमार्गपरिभ्रष्टा भ्रान्ता एव। [ पुनरन्यतो गत्वा ] अये ! कस्येदं द्वारोपान्त निखातातिप्रांशुवंशकाण्डताण्डवितधौतसितसूक्ष्माम्बरसहस्रमितस्ततो विन्यस्तकृष्णाजिनदृषदुपलचमसोदूखलमुषलमनवरतहुताज्याग्निधूमश्यामलितगगनमण्डलममरसरितो नातिदूरे विभात्याश्रमपदं नूनमिदं कस्यापि गृहमेधिनो गृहं भविष्यति तद्भवतु युक्तमिदमस्माकमतिपवित्रमेतद्द्विविदिवसनिवासाय स्थानम् [ इति प्रवेशं नाटयति । ]

[ विलोक्य ] अये !

मृद्बिन्दुलाञ्छितललाटभुजोदरोर-
कण्ठौष्ठपृष्ठचिबुकोरुकपोलजानुः ।
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भाङ्कुरः स्फुरति मूर्त्त इवैष दम्भः ॥

---

सर्पाकारं क्रमशो लघुगुटिकाभिर्ग्रथितं यद्वलयं तदीय प्रत्येकबीजग्रहे व्यपाङ्गुलया इत्यर्थः । अपाङ्गुलिरङ्गुल्यग्रम् । अये ! कस्येदमिति । कस्येदममरसरितो नातिदूरे विभात्याश्रम पदमित्यन्वयः । अमरसरितोगङ्गाया आश्रमपदमाश्रमस्थानम् । कीदृशं द्वारोपान्ते निखाते रोपितेति प्रांशुवंशकाण्डे उन्नवेणुखण्डे ताण्डवितं नर्त्तितं सितं सूक्ष्माम्बरसहस्रं यत्र तादृशम् । इतस्ततो विन्यस्तं कृष्णाजिनादि यत्र तादृशम् । दृषदुपलादीनि यज्ञपात्राणि चमसं यज्ञपात्रविशेषः । अनवरतं हुतमाज्यं यत्र तादृशाग्निधूमश्यामलितं गगण मण्डलं यत्र तादृशम् । विलोक्येति उपविष्टं दम्भं विलोक्येत्यर्थः । मृद्बिन्दिति । मूर्त्तो दम्भ इवैष स्फुरति कीदृशः मृद्बिन्दुना लाञ्छितं चिह्नितं ललाटादिजानुपर्य्यन्तं यस्य तादृशं उरोवक्षःस्थलं तथा चूडाग्रादिषु विराजमानोदर्भाङ्कुरो नवीनकुशो यस्य तादृशः

तन्नवतूपसर्पामि तावदेनम् [ उपसृत्य ] कल्याणं भवतु भवताम्

दम्भः । [ हुङ्कारेण तं वारयति ] ।

[ प्रविश्य वटुः ] । ब्रह्मन् ! दूरत एव स्थीयतां यतः पादशौ-
विधाय एतदाश्रमपदं प्रवेष्टव्यम् ।

अहं । [ सक्रोधं ] आः ! तुरुष्कदेशग्रामाः स्मः यतः श्रोत्रि-
यानतिथीन् पाद्यादिभिरग्रे गृहिणो नोपतिष्ठन्ते ।

दम्भः [ हस्तसंज्ञया समाश्वासयति ] ।

वटुः । एवमाराध्यपादा आदिशन्ति दूरदेशादागतस्य
भवतः कुलशीलादिकं सम्यगस्माभिर्न विदितमस्ति

अहं । आः ! पाप ! कथमस्माकमपि कुलशीलादिकं इदानीं
परीक्षितव्यं श्रूयताम् तावत् ।

गौड़ं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा ततो
भूरिश्रेष्ठिकनामधाम परमं तत्रोत्तमो नः पिता ।
तत्पुत्राश्च महागुणा न विदिताः कस्यात्र तेषामपि

---

चूड़ाकोषे कर्णे च तदीयच्छिद्रे प्रवेशित कुशः कटौ च वस्त्रबन्धनकुशः ।
उपसर्पणं समीपगमनम् । वटुर्दम्भस्य परिचारकोऽब्राह्मणः । प्रविश्येति
प्रवेशश्च दम्भाश्रमात्मकस्थलस्थाने बोध्यः । तुरुष्कदेशो यवनदेशः आराध्य-
पादा अस्मत्स्वामिनः । न विदितमस्तीति अतः कथं पाद्यादिकं देय-
मिति भावः । इदानीं परीक्षितव्यमिति सुप्रसिद्धस्यास्य कदापि केनाप्य-
परीक्षितत्वादिदानीमेव कथं परीक्षणीयमित्यर्थः । गौड़ं राष्ट्रमिति ।
गौड़देशीयानामहङ्कृतत्वात्तत्रापि राढीयानां तत्रापि भूरिश्रेष्ठकग्रामीया-
णामहङ्कृतत्वात् । महागुणा इति शोभनः पाठः महाकुला इति क्वचित्

प्रज्ञाशीलविवेकधैर्य्यविनयाचारैरहं चोत्तमः ॥

दम्भः । [ वटुं पश्यति । ]

वटुः ।[ताम्रघटीमादाय प्रविश्य] भगवन्! पादशौचं विधीयताम्।

अहं । [वटुहस्तात् ताम्रघटीमादाय] भवतु को दोष इति

[ तथा कृत्वोपसर्पति ]

दम्भः । [ दन्तानुपीड़यित्वा ] ब्रह्मन्! दूरे तावत् स्थीयतां कदाचित् वाताहताः प्रस्वेदकणिकाः प्रसरन्ति ।

अहं । अहो! अपूर्वमिदं ब्राह्मण्यम् ।

वटुः । एवमेवैतत् ब्रह्मन्! तथा हि—

अस्पृष्टचरणाः कस्य चूड़ामणि मरीचिभिः ।
नीराजयन्ति भूपालाः पादपीठान्तभूतलम् ॥

अहं । [ स्वगतम् ] दम्भराज्योऽयं देशः भवतु अस्मिन्नासने समुपविशामि [इत्युपवेष्टुमिच्छति]

वटुः।[वारयन्] मैवं मैवमाराध्यपादानामासनमन्यैराक्रम्यते।

अहं । आः पाप! अस्माभिरपि दक्षिणराढाप्रसिद्धविशुद्धिभिरिदमासनमनाक्रमणीयं शृणु रे मूर्ख!

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां यथा

---

पाठो न रुचिरः पितुरुत्तमत्वकथनेन तत्पुत्राणां कुलमहत्त्वप्राप्तेः । विवेकोऽत्र कृपा विचार्य्यार्थनिर्णयरूपस्य विवेकस्य प्रज्ञयैव गतार्थत्वात् एवं क्रियतां मयेति शेषः । अस्पृष्टचरणा इति । अर्थादेतद्विप्रस्य कस्यास्पृष्टचरणाः चरणावस्पृष्टवन्तो भूपालाः पादपीठान्तभूतलमर्थात् प्रणामकाले चूड़ामणिमरीचिभि र्नीराजयन्ति उज्ज्वलीकुर्व्वन्तीत्यर्थः । स्वगतमिति मनसा कथयतीत्यर्थः । नास्माकमिति । तथोज्ज्वलकुलेति यथा मत्पत्नीति

व्यूढा काचन कन्यका खलु मया तेनास्मि तातोधिकः ।
अस्मच्छ्यालविमातृमातुलसुता मिथ्याभिशस्ता तत-
स्तत्सम्बन्धवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥

दम्भः । यद्येवं तथापि नास्माकं विदितवृत्तान्तो भवान् ।

तथा हि सदनमुपगतोऽहं पूर्व्वमम्भोजयोनेः
सपदि मुनिभिरुच्चैरासनेषूज्झितेषु ।
सशपथमनुनाथ्य ब्रह्मणा गोमयाम्भः-
परिमृजितनिजोरावाशु सम्वेशितोऽस्मि ॥

अहं । अहो ! दाम्भिकस्य ब्राह्मणस्यात्युक्तिः [विचिन्त्य] अथ वा दम्भोऽयं स्वयं भवत्वेवं तावत् [सक्रोधं] आः ? किमेवं गर्व्वायसे ।

अरे ! क इह वासवः कथय कोऽत्र पद्मोद्भवी
वद प्रभवभूमयो जगति का ऋषीणामपि ।

शेषः । मत्तश्च आधिक्यमाह, सच्छोत्रियायामिति । व्यूढा परिणीता काचन अनिर्वचनीयसुशीला । नास्माकमित्यादि अस्मद्वृत्तान्तानभिज्ञ इत्यर्थः । सदनमिति । पूर्व्वं पूर्व्वकाले अम्भोजयोनेर्ब्रह्मणः सदनं सभामहमुपगतः तत उच्चैः सपदि अतिशीघ्रं मुनिभिरासनेषूज्झितेषु सत्सु ब्रह्मणा सशपथं शपथदानपूर्व्वकं मामनुनाथ्य स्वोरूपनिवेशनं याचित्वा गोमयाम्भःपरिमृजिते निजोरुदेशे आशु शीघ्रं संवेशित उपवेशितोऽस्मीत्यर्थः । भवत्वेवमिति । एतदुक्तं भवतु तिष्ठतु एवं तावन्मया वक्तव्यमित्यर्थः । वक्तव्यमेवाह अरे इति । इन्द्राद्यधिष्ठितत्वेनैव त्वया ब्रह्मणः सभाया गौरवं दृश्यते इन्द्राद्या एव के इत्याह क इहेति । आसनोज्झितारो मुनयस्तावत्तिष्ठन्तु तेषां पितरोऽपि के इत्याह वद प्रभवेति प्रभवभूमयः पितर इति ते कथं त्वया लघु क्रियन्त

अवेहि तपसो बलं मम पुरन्दराणां शतं
शतञ्च परमेष्ठिनां पततु वा मुनीनां शतम् ॥

दम्भः । [विलोक्य सानन्दः] अये ! आर्य्यः पितामहोऽस्माकमहङ्कार एष प्राप्तः आर्य्य ! लोभात्मजो दम्भोऽहमभिवादये ।

अह° । आगच्छ वत्स ! आयुष्मान् भव, बालः खल्वसि मया द्वापरान्ते दृष्टः सम्प्रति कालविप्रकर्षाद्वार्द्धक्यग्रस्ततया च न सम्यक् प्रत्यभिजानामि अथ त्वत्पुत्रस्यानृतस्य कुशलम् ?

दम्भः । अथ किं ? सोऽप्यत्रैव वर्त्तते न हि तेन विना मुहूर्त्तमप्यहं भवामि ।

अह° । तव मातापितरौ तृष्णालोभावप्यत्रैव ।

दम्भः । अथ किं ? तावपि महामोहस्य राज्ञ आज्ञया अत्रैव वर्त्तेते आर्य्यमिश्रैः पुनः केन प्रयोजनेनात्रागमनप्रसादः कृतः ।

अह° । वत्स ! मया महामोहस्य विवेकसकाशादत्याहितं श्रुतं तेन तद्वृत्तान्तं प्रत्येतुमागतोऽस्मि ?

दम्भः । तर्हि स्वागतमेवार्य्यस्य यतो महामोहस्यापीन्द्रलोकादत्राभ्यागमः श्रूयते अस्ति चैषा किम्बदन्ती यद्देवेन

---

इत्यत आह अवेहीति तपोबलेनेन्द्रादीनां शतमपि पातयितुं समर्थोऽस्मीति निष्कृष्टार्थः । परमेष्ठिनां ब्रह्मणाम् । अत्युक्त्या परिचिन्त्य दम्भस्यानन्दः । द्वापरान्त इति द्वापरान्तावध्येव लोकानां दाम्भिकत्वं कलौ त्वतिशय इति भावः । वार्द्धक्यग्रस्ततयेति । इदानीमहङ्कारस्यातिप्रवृद्धत्वादिति भावः । अथ किं स्यादनुमताविति नाटकपरिभाषाकोषः । न हि तेन विनेति दाम्भिकानां सर्व्वदैव मिथ्यावादित्वात् । तृष्णालोभौ कुकर्म्मणापि धनजिघृक्षारूपौ वाचकशब्दलिङ्गभेदात् स्त्रीपुंसौ । अत्राप्यथकिमित्यनुमतौ । आर्य्यमिश्रैरार्य्यश्रेष्ठैर्भवद्भिरिति शेषः । स्वागतमिति । उद्देश्यसिद्धेरचिरभावितया कुशलागमनमित्यर्थः । उद्देश्यसिद्धेरचिरभाविताभेव दर्शयति यत

वाराणसी नाम राजधानी निरूपयितव्येति ।

अह॑ । किं पुनः कारणं वाराणस्यां सर्व्वात्मना महा-मोहस्यावस्थाने ।

दम्भः । आर्य्य ! विवेकापरोध एव, तथा हि-

विद्याप्रबोधोदयजन्मभूमिर्वाराणसी ब्रह्मपुरी निरत्यया ।
अतस्तदुच्छेदविधिं विधित्सुर्निवस्तुमन्वेच्छति नित्यमेव सः ॥

अह॑ । [सभयम्] यद्येवमशक्यप्रतीकार एवायमर्थो ; यतः ।

परमविदुषां पदं नराणां पुरविजयी करुणाविधेयचेताः ।
कथयति भगवानिहान्तकाले भवभयकातरतारकं प्रबोधम् ॥

दम्भः । सत्यमेत् तथापि नैतत् कामक्रोधाद्यभिभूतानां सम्भाव्यते तथा ह्युदाहरन्ति ।

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥

---

इति । निरूपयितव्या कर्त्तव्या । विवेकापरोधो विवेककार्य्यविघातरूपं पीड़नम् । विद्याप्रबोधेति । ब्रह्मपुरी ब्रह्मनिर्म्मिता पुरी वाराणसी विद्याप्रबोधोदययोर्निरत्यया निर्विघ्ना जन्मभूमिः अतः कारणात्तस्य विद्याप्रबोधोदयजन्मन उच्छेदविधिं प्रतिबन्धविधानं विधित्सुः चिकीर्षुः सन् अत्र वाराणस्यां नित्यमेव वस्तुं स्थातुं महामोह इच्छति वाराणस्या विद्याप्रबोधोदयजन्मभूमित्वं संपादयति यत इति । परमिति भगवान् पुरविजयी महेशः करुणायत्तचेताः सन् इह वाराणस्यां अविदुषां अतत्त्वज्ञानिनां नराणां स्थानेऽन्तकाले मरणसमये भवभयकातराणां तारकं भवभयतारणहेतुं प्रबोधं कथयति ! प्रबोधं कीदृशं परं पदं परमं त्रायकमित्यर्थः । पदं व्यवसितित्राणस्थानलक्ष्मेषु कीर्त्तितमिति कोषे त्राणपदस्य त्रायतेऽनेन इति करणसाधनत्वात् । यस्य हस्तौ चेति । हस्तादिशौचसत्त्व एव तीर्थफलमित्यर्थः इयञ्च व्याख्या दम्भोक्तत्वादेव एतौ तु अतीर्थगतोऽपि स तीर्थफलमश्नुत

[नेपथ्ये] भो भोः पौराः ! एष खल्वयं संप्राप्तो देवो महामोहः तेन हि

निःस्यन्दैश्चन्दनानां स्फटिकमणिशिलावेदिकाः संस्क्रियन्तां
मुच्यन्तां यन्त्रमार्गाः प्रसरतु परितो वारिधारा गृहेषु ।
उच्चीयन्तां समन्तात् स्फुरदुरुमणयः श्रेणयस्तोरणानां
धूयन्तां सौधमूर्द्धस्वमरपतिधनुर्धामचित्राः पताकाः ॥

दम्भः । आर्य्य ! प्रत्यासन्नोऽयं महाराजः प्रत्युद्गमनेन सम्भाव्यतामार्य्येण ।

अहं । एवं भवत्विति [निष्क्रान्ताः सर्वे] विष्कम्भकः ।

[ततः प्रविशति महामोहः विभवतश्च परीवाराः]

महा । [विहस्य] अहो ! निरङ्कुशा जडधियः । तथा हि—
आत्मास्ति देहाद्व्यतिरिक्तमूर्त्तिर्भोक्ता स लोकान्तरितः फलानाम् ।

---

इत्यर्थः । निःस्यन्दैरित्यादि । स्फटिकमणिशिलानिर्म्मिता वेदिका राजोपवेशनस्थानानि चन्दनानां निःस्यन्दैः पातैः संस्क्रियन्तां यन्त्रमार्गा जलयन्त्रपथा मुच्यन्तां तत्फलमाह । प्रसरत्विति तोरणानां मङ्गलमालाधारकनिखातस्तम्भानां श्रेणयः समन्तादुच्चीयन्ताम् उत्तोल्यन्तां कीदृश्यः स्फुरन्त उरुमणयः प्रधानमणयो यत्र तादृश्यः मणिमालैव तोरणसृगित्यर्थः । सौधमूर्द्धसु यथा पताका धूयन्ते वायुना तथा क्रियन्तामित्यर्थः । पताकास्तत्रारोप्यन्तामिति पर्य्यवसितार्थः । कीदृश्यः अमरपतिधनुरो यद्धाम नानावर्णं तेजस्तद्वच्चित्राम्बराः पताका इत्यर्थः । विष्कम्भक इति । विष्कम्भकलक्षणमुक्तमेव प्रथमाङ्के । वटुसाहित्येन प्रयोज्यत्वाच्चायं प्रवेशकः । आत्मास्तीति देहाद्व्यतिरिक्तमूर्त्तिर्देहभिन्न आत्मा अस्ति स च लोकान्तरितः परलोके गतः सन् कर्म्मफलानां भोक्ता इत्येषा अलीकार्थविषया आत्मन एव देहभिन्नत्वा-

आशेयमाकाशतरोः प्रसूनात् प्रथीयसः स्वादुफलप्रसूतौ ॥

इदञ्च स्वकपोलकल्पनाविनिर्म्मितपदार्थावष्टम्भैर्जगदेव दुर्विदग्धैर्वञ्च्यते तथा हि—

यन्नास्त्येव तदस्ति वस्त्विति मृषा जल्पद्भिरेवास्तिकै-
र्वाचालैर्बहुभिस्तु सत्यवचसो निन्द्याः कृता नास्तिकाः ।
हंहो ! पश्यत तत्त्वतो यदि पुनश्छिन्नादितो वर्ष्मणो
दृष्टः किं परिणामरूषितचितेर्जीवः पृथक्कैरपि ॥

न केवलं जगदात्मन्येव तावदमीभिर्वञ्च्यते तथा हि—

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो
योषेयं वसु वा परस्य यदमुं भेदं न विद्मो वयम् ।

---

भावात् इत्याह आशेयमिति । प्रथीयसः पृथोराकाशतरोः प्रसूनादनन्तरं स्वादुफलरूपप्रसूतावेवेयमाशा इत्यर्थः आकाशतर्वाद्यलीकत्वात् । इदञ्चेति इदञ्च जगत् स्वकल्पनानिर्म्मितः पदार्थः शरीरभिन्न आत्मा तदवष्टम्भैस्तदवलम्बनैरित्यर्थः । आत्मनोऽलीकत्वं दर्शयति यन्नास्त्येवेति । यदात्मरूपं वस्तु नास्त्येव तदस्तीति मृषैव जल्पद्भिरास्तिकैर्वेदप्रमाण्याभ्युपगन्तृभि र्नास्तिकावेदप्रामाण्यानभ्युपगन्तारो वस्तुतः सत्यवचसो निन्द्याः कृताः आस्तिकाः कथं मिथ्यावादिन इत्यत आह हंहो ! पश्यतेति हंहो ! इत्याकाशसम्बोधने हे मध्यस्थाः ! पश्यत आस्तिककथानां प्रामाण्यं तदा पश्यत यदि तु इतश्छिन्नाद्वर्ष्मणः शरीरात् पृथग्जीवः कैरपि दृष्टः नन्वदर्शनेऽपि शरीरमध्य एव गुप्तस्तिष्ठतीत्यत आह परिणामेति वर्ष्मणः कीदृशात् परिणामे कालातिक्रमे रूषिता नष्टा चितिरवयवसञ्चयो यस्य तादृशात् तथा चावयवसञ्चयगुप्तत्वमपि न सम्भवतीत्यर्थः । न केवलमिति । स्वच्छन्दव्यवहाराधीनसुखपरित्यागादात्मवञ्चनम् । तुल्यत्व इति वर्णक्रमो ब्राह्मणक्षत्रियविट्शूद्रात्मकवर्णक्रमः कीदृशः किम्प्रमाणकः न हि शरीरे संस्थानविशेषस्तद्भेदकोऽस्तीत्याह तुल्यत्व इति मुखाद्यवयवैर्वपुषां तुल्यत्वे सत्यपीत्यर्थः इयं योषा स्त्री इदं वसु धनं वा परस्य इत्यर्थभेदं वयं न विद्मः योषा वसुनोः सम्ब-

हिंसायामथ वा यथेष्टगमने स्त्रीणां परस्वग्रहे
कार्य्याकार्य्यकथास्तथापि यदमी निष्पौरुषाः कुर्व्वते ॥

[विचिन्त्य] [सश्लाघं] सर्व्वथा लोकायतमेव शास्त्रं यत्र प्रत्यक्षमेव प्रमाणं पृथिव्यप्तेजोवायवस्तत्त्वानि अर्थकामावेव पुरुषार्थौ भूतान्येव चेतयन्ति नास्ति परलोको मृत्युरेवापवर्ग इत्येतदस्माकमभिप्रायानुवर्त्तिना वाचस्पतिना प्रणीय चार्व्वाकाय समर्पितं तेन च शिष्योपशिष्यद्वारेणास्मिन् लोके बहुलीकृतं तन्त्रम्।

[ततः प्रविशति चार्व्वाकः शिष्यश्च]

चार्व्वा। [शिष्यं प्रति] वत्स! जानासि दण्डनीतिरेव विद्या यत्रैयं वार्त्तान्तर्भवति धूर्त्तप्रलापस्त्रयी। तथा हि—

स्वर्गः कर्तृक्रियाद्रव्यनाशेऽपि यदि यज्वनाम्।
ततो दावाग्निदग्धानां फलं स्याद्भूरि भूरुहाम्॥

---

श्चिविशेषणीयत्वपरिचायकधर्म्माभावादिति भावः। तथाप्यमी आस्तिका हिंसायां स्त्रीणां यथेष्टगमने परस्वग्रहे च यत्कार्य्यकथाः कुर्व्वते तदमी निष्पौरुषाः स्वाच्छन्द्यरूपपुरुषकृत्यरोहिताः। लोकायतं चार्वाकशास्त्रम्। वायव इति। वायोरपि तन्मते त्वाचप्रत्यक्षत्वात्। भूतानि पृथिव्यप्तेजोवायवः चेतयन्ति ज्ञानं जनयन्ति शरीरे इति शेषः। मृत्युरेवेति पारलौकिकस्यात्मनोऽभावादिति भावः। चार्वाकस्य सूचितत्वात् तत्प्रवेशमाह ततः प्रविशतीति। वार्त्तापीति वार्त्ता त्रयी दण्डनीतिबोधिका त्वयपि दण्डनीत्यामन्तर्भवतीत्यर्थः। धूर्त्तेति दण्डनीतिबोधकत्वव्यतिरिक्ता पारलौकिकफलबोधिका त्रयीत्यर्थः। पारलौकिक फलासम्भवादित्याह तथा हीति। कर्त्ता तावत् परलोके फलभोक्ता क्रिया च फलदायिका द्रव्यञ्च परलोके भोगार्थं दीयमानसुवर्णादिकं एषां नाशेऽपि यदि स्वर्गः पारलौकिको भोग इत्यतो दावाग्नीति नष्टानामपि वृक्षाणां भूरि फलं स्यादित्यर्थः तदेत्यर्थे तत इति। यमादिबोधिकायाः श्रुतेरप्रामाण्यं

अपि च, मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारकम् ।
निर्व्वाणस्य प्रदीपस्य स्नेहः संवर्द्धयेच्छिखाम् ॥

शिष्यः । आचालिअ ! जइ एसो ज्जेव पुलिसत्थो जं खज्जिए जं पिज्जए ता किं एदेहिं तित्थिएहिं संसालसोक्खं पलिहलिअ अप्पा घोलघोलेहिं पलाअसट्ठआलपहुदिहिं व्वदेहिं खविज्जइ ।

चार्व्वाकः । धूर्त्तप्रणीतागमप्रतारितानामाशामोदकैस्तृप्तिरियं मूर्खाणां

पश्य । क्वालिङ्गनं भुजनिपीडितबाहुमूल-
भुग्नोन्नतस्तनमनोहरमायताक्ष्याः ।
भिक्षोपवासनियमार्कमरीचिदाहै-
र्देहोपशोषणविधिः कुधियां क्व चैषः ॥

---

साधयित्वा आत्मबोधिकायाः श्रुतेरपि तत् साधयति अपि चेति । आत्मनोऽभावान्निराश्रया यदि तृप्तिः श्राद्धेन जन्यते तदा निर्वाणत्वेन दीपाभावात् निराश्रयैव शिखा स्नेहेन जन्यतामित्यर्थः । शिष्य इति । शिष्योक्तिरिह पैशाची भाषा । आचालिअ इति । आचार्य्य ! यद्येष एव पुरुषार्थो यत् खाद्यते यत्पीयते तत् किमेतैस्तीर्थिकैः संसारसुखं परिहृत्य आत्मा घोरघोरैः पराकषष्ठकालप्रभृतिभिर्व्रतैः खेद्यते । इति सं । पराको व्रतविशेषः षष्ठकालः षष्ठकालभोजनमुपवासद्वयानन्तरनक्तभोजनरूपः । प्रत्यक्षसिद्धसुखपरित्यागेनालीकसुखार्थं दुःखाचरणमाशामोदकतृप्तिरेवेति दर्शयति पश्येति क्वालिङ्गनमिति । आयताक्ष्या दीर्घनयनाया आलिङ्गनं क्व कुधियां धूर्त्तप्रलापवेदप्रतारितास्तिकानां भिक्षादिभि र्देहोपशोषणविधिरेष च क्व

शिष्यः । आचालिश्र ! एवं तित्थिआ आलवन्ति दुक्खमिस्सिदं संसालसोक्खं पलिहलणिज्जं त्ति

चार्व्वा । [विहस्य] आः दुर्बुद्धिविलसितं पशूनाम् ।

त्याज्यं सुखं विषयसङ्गमजन्म पुंसाम्
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भो ! तुषकणोपहितान् हितार्थी ॥

महा । अये ! चिरेण खलु प्रमाणवन्ति वचनानि कर्णसुखमुपजनयन्ति

[विलोक्य सानन्दम्] हन्त ! प्रियसुहृदस्माकं चार्वाकः

चार्व्वा । [विलोक्य] एष महाराजो महामोहः ।

महा ! [उपसृत्य] जयति जयति महाराज, एष चार्वाकः प्रणमति ।

महा । चार्वाक ! स्वागतन्ते इहोपविश्यताम् ।

चार्व्वा [उपविश्य] देव ! कलेः साष्टाङ्गपातः प्रणामः ।

महा । अथ कलेर्भव्यमव्याहतम्

चार्व्वा । देवस्य प्रसादात् सर्वमव्याहतं निवर्त्तितकर्त्तव्य-

---

इत्यर्थः आलिङ्गनं कीदृशं भुजाभ्यां निपीड़ितौ अत एव बाहुमूले स्वैवक्षः-पार्श्वद्वये भुग्नौ नमितौ यौ स्तनौ ताभ्यां मनोहरम् । आचालिश्र इति । आचार्य्य! एवं हि तीर्थिका आलपन्ति दुःखमिश्रितं संसारसुखं परिहरणीयम् । इति स० । त्याज्यं सुखमिति । विषयसङ्गमजं सुखं दुःखोपसृष्टमिति ज्ञात्वा त्याज्यमित्येषा मूर्खविचारणा । भोः ! को हितार्थी तुषकणोपहितान् सितोत्तमतण्डुलयुक्तान् व्रीहीन् जिहासति त्यक्तुमिच्छति दुःखहेतुत्वात् तुषकणा दुःखस्थानीया सुखहेतुत्वात् सितोत्तमतण्डुलाः सुखस्थानीयाः । देव ! कलेरिति कलिकालस्येत्यर्थः । निवर्त्तितेति भवदादिष्टकार्य्यस्य शेषः कियानस्ति

शेषश्च देवस्य पादमूलं द्रष्टुमिच्छति । यतः—

आज्ञामवाप्य महतीं द्विषतां निपातात्
निर्वर्त्य तां सपदि लब्धसुखप्रसादः ।
उच्चैः प्रमोदमनुमोदितदर्शनः सन्
धन्यो नमस्यति पदाम्बुरुहं प्रभूणाम् ॥

महा । अथ तत्र कियत् सम्पन्नम् ?

चार्वा । देव !

व्यतीतवेदार्थपथः प्रथीयसीं यथेष्टचेष्टां गमितो महाजनः ।
तदत्र हेतुर्न कलिर्न चाप्यहं प्रभुप्रभावोहि तनोति पौरुषम् ॥

तत्रोत्तरपथिकाः पाश्चात्याश्च त्रयीमेव त्याजिताः शमदमादीनान्तु कैव चिन्ता अन्यत्रापि प्रायशो जीविकामात्रफलैव त्रयी यथाहाचार्य्यः ।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

---

निर्वर्त्ति ततच्छेषः सन् सदैव पादमूलं द्रष्टुमिच्छति अतस्तदर्थमापाततो नायात इत्यर्थः । निवर्त्तितप्रभ्वादिष्टसमस्तकार्य्य एव यः प्रभूणां पदाम्बुरुहं नमस्यति स एव प्रभुणानुमोदितदर्शनः सन् धन्य इत्याह आज्ञामवाप्येति । महतीं प्रभूणां आज्ञामवाप्य द्विषतां निपातात्तामाज्ञां निष्पाद्य सपदि लब्धस्वीयसुखप्रसादः सन् सुखप्रसाददर्शनात् निष्पादितकार्य्यत्वमनुमाय प्रभुणानुमोदितदर्शनः सन्नेव धन्यो भृत्यः प्रभूणां पदाम्बुरुहं नमस्यतीत्यर्थः । व्यतीतवेदार्थेति । महाजनव्यतीतवेदार्थपथस्त्यक्तवेदबोधितमार्गः सन् यथेष्टचेष्टां गमितः भक्ष्याभक्ष्यागम्यागमनादिव्यवहारे स्वच्छन्दः कृत इत्यर्थः । तदत्रेति इदं पौरुषं प्रभोर्भवतः प्रभाव एव तनोति न कलिर्न चाप्यहमत्र हेतुरित्यर्थः । कुत्र कुत्र देशे कीदृशं कृतमित्यत्राह तत्रेति । शमदमादीनान्त्विति वेदबोधितत्वादेव शमदमादीनामपीति भावः । अग्निहोत्रमिति । वेदार्थनिर्धारणरूपया बुद्ध्या तपःक्लेशसहत्वरूपपौरुषेण

तेन कुरुक्षेत्रादिषु तावद्देवेन स्वप्नेऽपि न विद्याप्रबोधोदयः शङ्कनीयः।

महा। साधु सम्पादितं महत् खलु तीर्थं व्यर्थीकृतम्।

चार्वा। अन्यच्च विज्ञाप्यमस्ति।

महा। किन्तत्।

चार्वा। अस्ति विष्णुभक्तिर्नाम महाप्रभावा योगिनी सा च यद्यपि कलिना विरलप्रचारा कृता तथापि तदनुगृहीतान्न वयमवलोकयितुमपि प्रभवामः तत्र देवेनावधातव्यम्।

महा। [स्वभयमात्मगतं] आः! प्रसिद्धा महाप्रभावा सा योगिनी स्वभावाद्विद्वेषिणी चास्माकं दुरुच्छेदा च; भवतु[प्रकाशं] अलमनया शङ्कया कामक्रोधादिषु प्रतिपक्षेषु कुतेयमुदेष्यति तथापि लघीयस्यपि रिपौ नानवहितेन जिगीषुणा भाव्यं यतः

विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुन्तुदः।
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः॥

कः कोऽत्र भोः? [प्रविश्य दौवारिकः] आज्ञापयतु देवः।

महा। आदिश्यन्तां कामक्रोधमदमानमात्सर्य्यादयो यथा विष्णुभक्तिर्नाम योगिनी भवद्भिरवहितैः प्रतिकर्त्तव्येति।

दौवा। यथाज्ञापयति देवः [इति निष्क्रान्तः]

---

च होतॄनामग्निहोत्रादिकं जीविका परप्रतारणेन धनोत्पादिकेति बृहस्पतिराहेत्यर्थः। त्रयो दण्डा यत्रेति बहुव्रीहिणा त्रिदण्डं अत इत्यर्थः अन्यथा त्रिदण्डीत्येव स्यात्। कुरुक्षेत्रादिष्विति कुरुक्षेत्रस्य पाश्चात्यदेशत्वान्मुक्तिक्षेत्रत्वाच्च। आत्मगतमिति मनःकथायां प्रकाशमिति। तदनन्तरं वक्रोक्तौ विपाकेति। राज्ञामल्पोऽपि रिपुर्विपाकेन कुकार्य्यघटनया दारुणः अरुन्तुदो महादुःखदायको भवतीति शेषः तत्र दृष्टान्तमाह उद्वेजयतीति अत्र पक्षे विपाकः व्रतस्य पक्वता। प्रविष्टपुरुषस्योक्तिः पैशाची भाषा।

[ततः प्रविशति पत्त्रहस्तः पुरुषः] हक्के उक्कलदेशादो आगदे अत्थि तत्थ साअलतील सण्णिवेशे पुलुसोत्तमसंण्णिदं देवदा-अदनं तस्सिं मदमाणकेहिं भट्टारकेरक एहिं महालाअसआसं पेसिदह्मि । [विलोक्य]

एसा वालाणसी एदं लाअउलं जाव प्पविशामि ।

[प्रविश्य विलोक्य च] ।

एशे भट्टारके चार्व्वाएण सह किम्पि मन्तअन्त चिट्ठदि ता उवसप्पामि णम् । [उपसृत्य]

जअदु जअदु भट्टके एदं पत्तं णिलुवेदु भट्टके ।[इति पत्रं समर्पयति]।

महा । [गृहीत्वा] कुतो भवान् ?

पुरु । पुलुसोत्तमादो ।

महा । [स्वगतं] कार्य्यमत्याहितं भविष्यति । [प्रकाशं] चार्व्वाक : गच्छ कार्य्येष्ववहितेन भवता भवितव्यम् ।

चार्व्वा । यथाज्ञापयति देवः [इति निष्क्रान्तः । ]

महा । [पत्रं गृहीत्वा वाचयति] स्वस्ति वाराणस्यां महाराजाधिराजपरमेश्वरपरमभट्टारकश्रीमन्महामोहपादान्

---

हक्के इति । अहमुत्कलदेशादागतः अस्ति तत्र सागरतीरसन्निवेशे पुरुषो-त्तमसंज्ञितं देवतायतनं तस्मिन् मदमानाभ्यां भट्टारकाधीनाभ्यां महा-राजसकाशं प्रेषितोऽस्मि । इति स० । एषा वाराणसी एतद्राजकुलं यावत् प्रविशामि । इति स० । राजा भट्टारको देवस्तत्सुता भर्तृदारिकेति नाट-कभाषाकोषः भट्टार एव भट्टारक एकदेशे म्लेच्छभाषा केरकोऽधीने देशी राजकुलं राजधानी यावत्तावद्द्वयमपि वाक्यालङ्कारे । एसे भट्टारके इति एष भट्टारकश्चार्वाकेण सह किमपि मन्त्रयंस्तिष्ठति तदुपसर्पाम्येनम् । इति स० । जअदु इति । जयतु जयतु भट्टारक । एतत् पत्रं निरूपयतु भट्टारकः । इति स० । पुलुसेति । पुरुषोत्तमात् । इति स० । उपजप्त इवेति

पुरुषोत्तमायतनान्मदमानौ साष्टाङ्गपातं प्रणम्य विज्ञापयतः यथाभव्यमव्याहतमन्यत् देवी शान्तिर्मात्रा श्रद्धया सह विवेकस्य दौत्यमापन्ना विवेकसङ्गमाय देवीमुपनिषदमहर्निशं प्रबोधयति अपि च कामसहचरो धर्म्मोऽपि वैराग्यादिभिरुपजप्त इव लक्ष्यते यतः कामाद्विच्छिद्य क्वचिन्निगूढं प्रचरति तदेतज्ज्ञात्वा देवः प्रमाणमिति।

महा। [ सक्रोधं ] आः! किमेवमतिमूर्खाः शान्तेरपि बिभ्यति मयि जीवति कुतोऽस्याः सम्भवः? तथा हि—

धाता विश्वविसृष्टिमात्रनिरतो देवोऽपि गौरीभुजा
श्लेषानन्दविघूर्णमाननयनो दक्षाध्वरध्वंसकृत्।
दैत्यारिः कमलाकपोलमकरीपत्राङ्कितोरःस्थलः
शेतेऽध्यावितरेषु जन्तुषु पुनः का नाम शान्तेः कथा॥

[ पुरुषं प्रति ]। गच्छ जाल्म! कामं सत्वरमुपेत्यादेशमस्माकं

---

निगूढं कथा उपजापः निगूढकथित इवेत्यर्थः वैराग्यमुत्पन्नमिति सम्भावनायैव वैराग्यादिभिरुपजप्त इवेति लिखितम्। वस्तुतस्तु वैराग्योत्पत्तिरग्र एव भविष्यति पञ्चमाङ्के च तद्बोध्यम्। यतः कामाद्विच्छिद्येति निष्कामेणापि केनचित् केनचिद्धर्म्माचरणात्। धाता विश्वेति। शान्तिस्तावत् सात्त्विकानामेव भवति सात्त्विका एव न सन्तीत्याह धातेति विश्वविधानं राजसिकहृत्यमेवेति धाता न शान्तः। रुद्रस्य गौरीभुजेत्यादिना कामित्वं दक्षेत्यादिना तामसिकत्वमपि तस्य दर्शितमिति न तत्र सुतरां शान्तिः। दैत्यारिश्च तामसिकत्वेनैव दैत्यहिंसकः कमलेत्यादिना तस्य कामित्वञ्च प्रतिपादितं शेतेऽध्यावित्यनेन निद्रासत्वाच्च तत्र शान्तिरतस्त एव यदि न शान्तास्तदा क्षुद्रेषु इतरेषु जन्तुषु नाम सम्भावनायां का कथा शान्तेरित्यर्थः। कपोलमकरीपत्रं नवपल्लवनिर्म्मितमकरीरूपं कपोलभूषणं स्ववक्षसि तत्कपोलार्पणात्तदङ्कितवक्षःस्थलत्वं दैत्यारेः। जाल्मेति निकृष्ट-

प्रतिपाद्य यथा दुराशयो धर्म इत्यस्माभिरधिगतं तदस्मिन् मुहूर्त्तमात्रमपि न विश्वसितव्यं दृढं बद्धा धारयितव्य इति ।

पुरु । जं देवो आणवेदि [ इति निष्क्रान्तः । ]

राजा । [ विचिन्त्य ] शान्तेः कोऽभ्युपायः अथ वा अलमुपायान्तरेण क्रोधलोभावेव तावत् पर्य्याप्तौ कः कोऽत्र भोः !

प्रविश्य पुरुषः । एसह्मि, आणवेदु महाराओ ।

राजा । आहूयतां, क्रोधो लोभश्च ।

पुरु । जं देवो आणवेदि [ इति निष्क्रान्तः ] ।

[ ततः प्रविशति क्रोधो लोभश्च ]

क्रोधः । सखे ! श्रुतं मया शान्तिश्रद्धाविष्णुभक्तयो महाराजमहामोहस्य प्रतिकूलतामाचरन्तीति आः ! जीवति मयि कथमासामात्मनिरपेक्षं चेष्टितं तथा हि—

अन्धीकरोमि भुवनं बधिरीकरोमि
धीरं सचेतनमचेतनतां नयामि ।
कृत्यं न पश्यति न येन हितं शृणोति
धीमानधीतमपि न प्रतिसन्दधाति ॥

लोभः । अये ! मदुपगृहीता मनोरथसरित् परम्परामिव न

---

स्यर्थः । जं देवो इति । यत् देव आज्ञापयति । इति स० । अन्धीकरोमीति । भुवनमन्धीकरोमि धीरं बधिरीकरोमि सचेतनं जनमचेतनतां नयामि येनान्धीकरणेन कृत्यं न पश्यति यथार्थज्ञानः येन बधिरीकरणेन हितं न शृणोति येनाचेतनतानयनेनाधीतमर्थं धीमान्न प्रतिसन्धत्त इति यथासंख्यमन्धीकरणादेः कार्य्याणि कृत्यादर्शनादीनि बोध्यानि मदुपगृहीता

तरिष्यन्ति किं पुनः शान्त्यादीन् विचिन्तयिष्यन्ति पश्य सखे!

सन्त्येते मददन्तिनो मदजलप्रम्लानगण्डस्थला
वातव्यायतपातिनश्च तुरगा भूयोऽपि लप्स्येऽपरान्।
एतल्लब्धमिदं लभे पुनरिदं लब्धाधिकं ध्यायतां
चिन्ताजर्ज्जरचेतसां वत नृणां का नाम शान्तेः कथा॥

क्रोधः। सखे! विदितस्त्वया मत्प्रभावः।

त्वाष्ट्रं वृत्रमघातयत् सुरपतिश्चन्द्रार्द्धचूड़ोऽच्छिन-
द्देवो ब्रह्मशिरो वशिष्ठतनयानाघातयत् कौशिकः।

अपि चाहं।

विद्यावन्त्यपि कीर्त्तिमन्त्यपि सदाचारावदातान्यपि
प्रोच्चैः पौरुषभूषणान्यपि कुलान्युद्धर्त्तुमीशः क्षणात्॥

लोभः। [नेपथ्याभिमुखमवलोक्य] प्रिये तृष्णे! इतस्तावत्।

---

जना इति शेषः। सन्त्येत इति। लब्धाधिकं ध्यायतां जनानां नाम सम्भावनायां का शान्तेः कथा तत्र लब्धाधिकध्यानं दर्शयति सन्त्येत इति मदजलैः प्रम्लानगण्डस्थला एते मददन्तिनो मम सन्ति वातवद्व्यायत पातिनो दीर्घवेगास्तुरगा भूयोऽपि सन्ति भूयः पुनरपि अपरान् दन्तितुरगान् लप्स्ये एतद्दन्त्यादिकं लब्धं इदं त्रुटिस्थं पुनर्लभे इदं शब्द इति शब्दार्थे इति लब्धाधिकं ध्यायतामित्यर्थः नृणां कीदृशानां चिन्ताजर्ज्जरचेतसाम्। क्रोधः स्वभावं दर्शयति त्वाष्ट्रं वृत्रमिति। हिंसायाः क्रोधमूलकत्वात् वृत्रादिहिंसां दर्शयति त्वष्टुः पुत्रं वृत्रनामानं सुरपतिरिन्द्रोऽघातयत् जघान स्वार्थे कारितं चन्द्रार्द्धचूड़ो महादेवो ब्रह्मणः शिरोऽच्छिनत् पुरा हि ब्रह्मापि दशशिरा आसीत् तस्य एकं शिरो महेशेन छिन्नमिति पौराणिकी कथा कौशिको विश्वामित्रो वशिष्ठस्य शतं तनयान् राक्षसद्वारा आघातयत् इति पौराणिकी कथा आघातयदिति आङ्पूर्वो हन्तिः। अहं विद्यादिमन्त्यपि कुलानि क्षणादुद्धर्त्तुमुन्मूलयितुं क्षमः सदाचारेणावदातानि निर्म्मलानि।

प्रविश्य तृष्णा । किं आणवेदि अज्जउत्तो ।

लोभः । प्रिये ! श्रूयताम् ।

क्षेत्रग्रामवनाद्रिपत्तनपुरद्वीपक्षमामण्डल-

प्रत्याशाघनसूत्रबद्धमनसां लब्धाधिकं ध्यायताम् ।

तृष्णे देवि ! यदि प्रसीदसि तनोष्यङ्गानि तुङ्गानि चेत्

तन्नो: ! प्राणभृतां कुतः शमकथा ब्रह्माण्डलक्षैरपि ।

तृष्णा । अज्जउत्त ! सयं ज्जेव दाव अहं एदस्सिं अत्

णिच्चं अहिउत्ता सम्पदं उण अज्जउत्तस्स आणाए ब्रह्मण्डको

डीहिं पि ण मे उअरं पूरइस्सदि—

क्रोधः । हिंसे ! इतस्तावत् ।

प्रविश्य हिंसा । अज्जउत्त इअह्मि आणवेदु अज्जउत्तो ।

क्रोधः । प्रिये ! त्वया सह धर्म्मचारिण्या मातापित्रादि

बधोऽपि ममैषत्कर एव तथा हि ।

केयं माता पिशाची क इह स जनको भ्रातरः केऽत्र कीट

किं आणवेति । किं आज्ञापयत्यार्य्यपुत्रः । इति स० । क्षेत्रग्रामेति ।

तृष्णे देवि ! यदि प्रसीदसि अङ्गानि चेत्तुङ्गानि तनोषि भोस्तदा ब्रह्माण्

लक्षैरपि कुतः प्राणभृतां प्राणिनां शम कथा शान्तिप्रसङ्गः प्राणभृ

कीदृशानां क्षेत्रादिक्षमामण्डलेषु या प्रत्याशा सैव घनतन्तुस्तेन ब

मनसां अत एव तादृशलब्धाधिकं ध्यायतां क्षेत्रं केदारः ततोऽधि

ग्रामः तदुपरिस्थितं वनं ततोऽधिकं तदुपरिस्थितोऽद्रिः ततोऽधिकः

परिस्थितमग्राम्यं पत्तनं नगरं ततोऽधिकं तदुपरिस्थिताऽग्राम्या पुरी ततोऽधि

द्वीपो जम्बूद्वीपादिस्ततोऽधिकः सप्तद्वीपात्मकं क्षमामण्डलं ततोऽधिकं इ

लब्धाधिकम् । अज्जेति आर्य्यपुत्र ! स्वयमेव तावदहमेतस्मिन्नर्थे नित्यमभि

युक्तः साम्प्रतं पुनराचार्य्यपुत्रस्याज्ञया ब्रह्माण्डकोटिभिरपि न मे उद

पूरयिष्यति । इति स० । अज्जेति आर्य्यपुत्र ! इयमस्मि आज्ञापयतु आर्य्य

पुत्रः । इति स० । केयं मातेत्यादि सुगमम् । कुटिलेति अमी भ्रातर इत्य

बध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी।

[इत्तो निष्क्रोश्य]

आगर्भं यावदेषां कुलमिदमखिलं नैव निष्पेषयामि
स्फूर्ज्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे स्फुलिङ्गाः॥

[अवलोक्य] एष स्वामी तदुपसर्पामः।

सर्व्वे। [उपसृत्य] जयति जयति देव।

राजा। [विलोक्य] श्रद्धाया स्तनया शान्तिरस्मत्कुलद्वेषिणी सा भवद्भिर्निग्राह्या इति।

सर्व्वे। यदादिशति देवः इति [निष्क्रान्ताः]

महा। श्रद्धायास्तनया इत्युपक्षेपेण उपायान्तरमपि हृदयमारूढं तथा हि शान्तिर्नाम श्रद्धापरतन्त्रा तत् केनाप्युपायेन उपनिषत्सकाशात् श्रद्धाकर्षणं कर्त्तव्यं ततो मातृवियोगदुःखादतिमृदुतया शान्तिरुपरता भविष्यति अवसीदन्ती वाऽचिरं विनङ्क्ष्यति श्रद्धाश्चाकष्टुं मिथ्यादृष्टिरेव वारविलासिनी परं प्रगल्भा तदस्मिन् विषये सैव नियुज्यतां पार्श्वतोऽवलोक्य विभ्रमवति! सत्वरमाह्वयतां मिथ्यादृष्टिः।

---

कीदृशाः कुटिला विटा धूर्त्ताः एवंभूता एव सुहृच्चेष्टिताः आगर्भमिति एषां मात्रादीनां दृश्यमानानां अन्येषां वा इदमखिलं कुलं यावदागर्भं गर्भस्थपर्य्यन्तं नैव निष्पेषयामि तावन्ममाङ्गे क्रोधवह्नेः स्फूर्ज्जन्तो दीप्यमानाः स्फुलिङ्गा नैव विरतिं दधति। उपक्षेपेण उपन्यासेनेत्यर्थः। मृदुतया क्षीणतया। उपरता मृता। विनङ्क्ष्यति पलायिष्यते। मिथ्यादृष्टिर्नास्तिकता। वेदप्रामाण्यानभ्युपगन्तृतया वेदविशेषोपनिषदः श्रद्धाकर्षणं युक्तमेव नास्तिकबाहुल्यात् तत्सम्बन्धवत्त्वात् मौनव्यवहारस्वातन्त्र्याच्च तस्या वेश्याविलासिनीत्वम्। विभ्रम एव विभ्रमवती स्वार्थे मतुपा संज्ञा कृता वेश्यविला-

प्रविश्य विभ्र । जं देओ आणवेदि

[ इति निष्क्रम्य मिथ्यादृष्ट्या सह प्रविशति ]

मिथ्या । सहि ! चिरेण दिट्ठस्स महाराअस्स मुहं कधं पेक्खिस्सं ण क्खु महाराओ उवालहिस्सदि ।

विभ्र । सहि ! तुह दंसणेण महाराओ अप्पाणं ज्जेव जइ चेदिस्सदि तदो उवालहिस्सदि ।

मिथ्या । सहि ! कीसं मं अलिअं सोहग्गं सम्भाविअ विलम्बेसि ।

विभ्र । सहि ! सम्पदं ज्जेव पेक्खिस्सं तुह सोहग्गस्स अलिअत्तणं अणस्स घुम्माणं विअ पिअसहीए लोअणं पेक्खामि ता किं उण पिअसहीए उण्णिद्दाए कारणम् ।

मिथ्या । सहि ! एक्कवल्लहाओ जाओ इत्थिआओ होन्ति ता णं विणिद्दा दुल्लहा किं उण अह्माणं सअलजणवल्लहाणम् ।

---

सिन्याः सन्निधौ तस्याः प्रेषणस्यैवौचित्यात् । जं देओ इति । यद्देव आज्ञापयति । इति स० । सहीति । सखि ! चिरेण दृष्टस्य महाराजस्य मुखं कथं प्रेक्षिष्ये न खलु महाराजउपालप्स्यते । इति स० । यद्यपि मिथ्यादृष्टेर्महामोहसान्निध्यविरतेरसम्भवात् चिरेण दृष्टस्येति वक्तुमनुचितं तथापि सान्निध्येच्छाधिक्यात् सान्निध्येऽपि असान्निध्यारोपणादिदमुक्तम् । सहीति । सखि ! तव दर्शनेन महाराज आत्मानमेव यदि चेतिष्यति तदा उपालप्स्यते । इति स० । चेतिष्यति ज्ञास्यति । कीसेति । कीदृशं मां अलीकं सौभाग्यं संभाव्य विडम्बयसि । इति सं । सहीति । सखि ! साम्प्रतमेव प्रेक्षिष्ये तव सौभाग्यस्यालीकत्वं अन्यस्य घूर्णमानमिव प्रियसख्या लोचनं प्रेक्षे तत् किं पुनः प्रियसख्या उन्निद्रायाः कारणम् । इति स० । सहीति । सखि ! एकवल्लभायास्त्रियो भवन्ति तासामपि निद्रा दुर्लभा किं पुनरस्माकं सकलजन-

विभ्र। के उण पिअसहीए बल्लहा।

मिथ्या। महाराओ अदो उवरि कामो कोहो लोहो अधवा अलं बिसेसेण एत्थ उले जे जादा ते ज्जेव हिअअणि-हिदाए मए अहिरमेन्ति मए बिणा बालो जुआ थविरो वा ण चिठ्टदि।

विभ्र। सहि! कामस्स रइ कोहस्स हिंसा लोहस्स तिसा परमपिअ त्ति सुणीअदि ताणं प्पिअदमं णिच्च रमेन्ती कधं ईस्सं ण जणेसि।

मिथ्या। एत्थ किं भणीअदि ताओबि मए बिणा मुहूत्तअं पि ण चिट्ठन्ति।

विभ्र। अदो ज्जेव भणामि तुह सरिसी इत्थिआ इह पुह-वीए णत्थि त्ति जाए सोहग्गमाहप्पबिद्दाबिदहिअ एसाओ पत्तिआओ वि आणां पडीच्छन्दि। सहि! अस्सञ्च भणामि एवं णिद्दाउलहिअआ बिसंट्ठुलखलन्तचलणणेउरझङ्कारमु-

ल्लभानाम्। इति स०। के उण इति। के पुनः प्रियसख्या वल्लभाः। इति । महेति। महाराज! अत उपरि कामः क्रोधो लोभः अथवा अलं विशे-ण अत्र कुले ये जातास्ते हृदयनिहितया मया अभिरमन्ते मया विना बालः विरो युवा वा न तिष्ठति। इति स०। सहीति। सखि! कामस्य रतिः क्रोधस्य हिंसा लोभस्य तृष्णा परमप्रिया इति श्रूयते तासां प्रियतमं रमयन्ती कथ-मीर्ष्यां न जनयसि। इति स०। एत्थ इति। अत्र किं भण्यते ता अपि मया विना मुहूर्त्तमपि न तिष्ठन्ति। इति स०। अदो ज्जेवेति। अतएव भणामि तव सदृशी स्त्री इह पृथिव्यां नास्तीति यस्याः सौभाग्यमाहात्म्यविद्रावितहृदयेर्ष्याः सपत्न्योऽप्याज्ञां प्रतीच्छन्ति। इति स०। आज्ञामर्थात् स्वीयपतिना त्वद्-दत्तामाज्ञां प्रतीच्छन्ति ददति। सखि! अन्यच्च भणामि एवं निद्राकुलहृदया विसंष्ठुलस्खलच्चरणनूपुरझङ्कारमुखरया गत्या महाराजं सम्भावयन्ती यक्षि-

हराए गईए महाराअं सम्भावन्ती सङ्किदहिअअं तं करिस्सदि पिअसहि त्ति तक्केमि।

मिथ्या। किं एत्थ सङ्किदव्वं णं अह्माणं महाराअविउत्ताणं ज्जेव ईरिसो अविणओ सहि! दंसणमेत्तप्पसण्णाणं पुलिसाणं केरिसं भअम्।

मह। [विलोक्य] प्राप्तैव प्रियतमा मिथ्यादृष्टिः या एषा।

श्रोणीभारभरालसा दरगलन्माल्यापवृत्तिच्छला-
लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः।
नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो
दोरान्दोलनलोलकङ्कणझनत्कारोत्तरं सर्पति॥

विभ्र। एसो महाराओ उवसप्पदु पिअसही।

मिथ्या। [उपसृत्य] जअदु जअदु महाराओ।

---

तद्धृदयं तं करिष्यति प्रियसखीति तर्कयामि। इतिम०। किं एत्थ इति। किमत्र शङ्कितव्यं नन्वस्माकं महाराजवियुक्तानामेवेदृशोऽविनयः सखि! दर्शनमात्रप्रसन्नेभ्यः पुरुषेभ्यः कीदृशं भयम्। इतिम०। श्रोणीभारेति। या एषा दोरान्दोलनेन हस्तचालनेन यः कङ्कणझणत्कारस्तदुत्तरं यथा स्यात्तथा सर्पति कीदृशी श्रोणीभारो गुरुतरनितम्बस्तद्भरेण तद्गुरुत्वेन अलसा मन्दगतिः दरगलतोऽल्पस्खलतो माल्यस्यापवृत्तिः स्वस्थानस्थापनं तच्छलात् लीलया उत्क्षिप्त उत्तोलितो यो भुजः तेनोपदर्शितयोः कुचयोरुन्मीलन्ती दृश्यमाना नखाङ्कावलिर्यस्याः तादृशी नीलेन्दीवरदामतुल्यया दीर्घतरया दृष्ट्या मनो धयन्ती पिबन्ती। यद्यपीन्दीवरन्तु नीलाब्जे इत्येतावतैव नीलेत्यस्य गतार्थता तथापि नीलपदसमभिव्याहारे इन्दीवरपदस्य उत्पलमात्रे लाक्षणिकत्वं मयूरकेकादियत्। एसो इति। एष महाराज उपसर्पतु प्रियसखी। इतिम०। जअदु इति जयतु जयतु महाराज। इतिम०।

राजा। प्रिये!

दलितकुचनखाङ्कमङ्कपालिं रचय ममाङ्कमुपेत्य पीवरोरु!
अनुहर हरिणाक्षि! शङ्कराङ्कस्थितहिमशैलसुताविलासलक्ष्मीम्॥

मिथ्या। [ सस्मितं तथा करोति ]

राजा। [ आलिङ्गनसुखमभिनीय ] अहो! प्रियापरिष्वङ्गात् परावृत्तमिव नवयौवनेन, तथा हि—

यः प्रागासीदभिनववयोविभ्रमावाप्तजन्मा
चित्तोन्माथी विगतविषयोपप्लवानन्दसान्द्रः।
वृत्तीरान्तस्तिरयति तवाश्लेषजन्मा स कोऽपि
प्रौढप्रेमा नव इव पुनर्मान्मथो मे विकारः॥

मिथ्या। महाराअ! अहम्मि साम्पदं णवजोवणा व्व सम्बुत्ता णं क्खु भावानुबन्धो प्पेमो काले वि विहलेदि ता आणवेदु भट्टा किं णिमित्तं सुमरिदह्मि?

---

दलितकुचनखाङ्कमिति। हे पीवरोरु! पीनोरु! ममाङ्कमुपेत्य दलितकुचनखाङ्कं श्लिष्टकुचनखाङ्कं यथा स्यात्तथा अङ्कपालिमालिङ्गनं रचय हे हरिणाक्षि! शङ्कराङ्कस्थितायाः हिमशैलसुतायाः पार्वत्याः विलासलक्ष्मीमनुहर, स्वविलासलक्ष्मीं सदृशीं कुरु। यः प्रागासीदिति। अभिनववयोविभ्रमावाप्तजन्मा चित्तोन्माथी मान्मथो यो विकारः प्राक् तवाश्लेषकालतः पूर्वं विगतविषयोपप्लवानन्देन विषयव्यापारजन्मानन्दनिगमेन सान्द्रो व्याप्त आसीत् वार्द्धक्यात् कामिनीसम्भाषारूपविषयव्यापारजन्यानन्दरहित आसीत् स कोऽप्यनिर्वचनीयो विकारः तवाश्लेषजन्मा सन् आन्तर्वृत्तीरन्तर्मनसि वृत्तीर्व्यवसायांस्तिरयति प्रतिबध्नाति अन्तर्जडयतीत्यर्थः आन्तर्वृत्तीरित्यात्र पूर्वोऽन्तःशब्दोऽव्ययः न त्वन्तःसम्बन्धिन्य इत्यर्थे तद्धितान्तः तदा आन्तरीरित्येव स्यात्। पुनः कीदृशः प्रौढप्रेमा सम्प्रति वर्द्धितप्रेमा। महाराअ इति। महाराज! अहमपि साम्प्रतं नवयौवनेव संवृत्ता न खलु भावानुबन्धं प्रेमकालेऽपि विघटते तदाज्ञापयतु भट्टारकः किं

मह्रा । प्रिये !

स्मर्य्यते स हि वामोरु ! स्थितो यो हृदयाद्बहिः
मच्चित्तभित्तौ भवती शालभञ्जीव राजते ॥

मिथ्या । मह्राप्पसादो एसो ।

मह्रा । अन्यच्च दास्याः पुत्री श्रद्धा विवेकेन सह उपनिषदं योजयितुं कुट्टिनीभावमापन्ना अतः ।

प्रतिकूलामकुलजां पापां पापानुवर्त्तिनीम् ।
केशेष्वाकृष्य तां रण्डां पाषण्डेषु नियोजय ॥

मिथ्या । एव्वह्रमेत्ते विसए अलं भट्टुणो अहिणिवेसेण वअणमेत्तकेण ज्जेव भट्टुणो सद्धा दासि व्व आणां करिस्सदि सा क्खु मए मिच्छाधम्मो मिच्छामोक्खो सोक्खविग्घकराइं मिच्छासत्थप्पलविदाइं त्ति भणन्ती वेअमग्गं ज्जेव परिहरिस्सदि किं उण उअणिसदं अविअ विसआणन्दविमुक्के मोक्खे दोसं दंसअन्तीए मए उअणिसदो विरत्ता करिज्जइ सद्धा ।

---

निमित्तं कृतास्मि । इति स० । स्मर्य्यते सहीति, हे वामोरु ! हे मनोज्ञोरु ! यो हृदयाद्बहिः स्थितः स एव स्मर्य्यते भवती तु मच्चित्तरूपायां भित्तौ देहल्यां शालभञ्जीव लिखितकृत्रिमपुत्तलिकेव निविड़सम्बन्धा राजत इत्यर्थः । महेति । महाप्रसाद एषः । इति स० । दास्याः पुत्रीत्यधिक्षेपोक्तिः । प्रतिकूलामिति । तां श्रद्धां केशेष्वाकृष्य पाषण्डेषु नियोजय कीदृशीं कथम् प्रतिकूलां विपक्षकुलजातां पापां रण्डामित्यधिक्षेपोक्तिः पापानुवर्त्तिनीं पापानां विवेकादीनामनुकूलाम् । एव्वह्रमेत्ते इति । एतावन्मात्रे विषये अलं भर्त्तुरभिनिवेशेन वचनमात्रकेणैव भर्त्तुः श्रद्धा दासीव आज्ञां करिष्यति सा खलु मया करणभूतया मिथ्याधर्म्मो मिथ्यामोक्षः सौख्यविघ्नकराणि मिथ्याशास्त्रप्रलपितानीति भणमाना वेदमार्गमेव परिहरिष्यति किं पुनरुपनिषदम् । इति स० । भणमानेत्यत्र मयेति शेषः । अविअ इति । अपि च विषयानन्दविमुक्ते मोक्षे दोषं दर्शयन्त्या मया उपनिषदो विरक्ता क्रियते श्रद्धा ।

मद्दा । यद्येवं सुष्ठु प्रियं सम्पादितप्रायं प्रिययेति [ पुनरालिङ्ग्य चुम्बति ]

मिथ्या । भट्टा पअआसे एवं पउत्तेण भट्टिणा लज्जेमि ।

मद्दा । भवतु वा सागरं प्रविशामः [ इति निष्क्रान्ताः सर्व्वे ]

इति महामोहप्रधानो नाम द्वितीयोऽङ्कः

## तृतीयोऽङ्कः ।

[ ततः प्रविशति शान्तिः करुणा च ]

शान्तिः । [ सास्रं ] मातर्मातः ! क्वासि देहि मे प्रतिवचनम् ।

मुक्तातङ्ककुरङ्गकाननभुवः शैलाः स्खलद्वारयः
पुण्यान्यायतनानि सन्ततपोनिष्ठाश्च वैखानसाः ।
यस्याः प्रीतिरमीषु साद्य भवती चाण्डालवेश्मोदरं
प्राप्ता गौः कपिलेव जीवति कथं पाषण्डहस्तं गता ॥

भट्टेति । हे भट्टारक प्रकाशे एवं प्रवृत्तेन भर्त्रा लज्जे । इति स० ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां प्रबोधचन्द्रोदय टीकायां द्वितीयाङ्कविवरणम् ।

इतः परं मिथ्यादृष्टिप्रयुक्तया महाभैरवीविद्यया आलभ्य नीतायां श्रद्धायां करुणया सह तत्पुत्र्याः शान्त्याः सशोकं तद्विचारणम् । मुक्तातङ्केति । हे मातः ! श्रद्धे ! यस्या भवत्याः पूर्व्वोक्तेष्वमीषु प्रीतिः सा भवती अद्य पाषण्डहस्तं गता कथं जीवति चण्डालवेश्मोदरं प्राप्ता । कपिला गौरिव चण्डालोऽत्र गोहिंसको यवनादिर्बोध्यः प्रीतिविषयानाह मुक्तातङ्केति मुक्तातङ्का निर्भयाः कुरङ्गा यत्र तादृशकाननभुवो मुनीनां विहारभुमा इत्यर्थः स्खलद्वारयः पतन्निर्झरजलाः शैलाः पुण्यान्यायतनानि पुण्यदेवस्थलाः सन्ततपोनिष्ठा वैखानसाश्च यस्याः प्रीतिरमीष्वित्यर्थः । भिक्षामटित्वा प्रयतोऽष्टमासान् वाणप्रस्थेन तिष्ठति भूरिकालम् । यो यत्र-

अथ वा अलं जीवनसम्भावनया यतः ।

मामनालोक्य न स्नाति न भुङ्क्ते न स्वपित्यपि ।
न मया रहिता श्रद्धा क्षणार्द्धमपि जीवति ॥

तद्विना श्रद्धया शान्तेर्मुहूर्त्तमपि जीवनं विडम्बनमेव तत् सखि करुणे ! चितामारचय यावदचिरमेव हुताशनप्रवेशेन तस्याः सहचरी भवामि ।

करुणा । [ सास्रम् ] सहि ! एब्वं बिसमजलणजालासलक्क-दुस्सहाइं अक्खराइं जप्पन्ती सब्बधा बिलुत्तजीबिदं मं करेसि ता प्पसीद मुहुत्तअं जीबिदं धारेदु प्पियसही जाब इदो तदो प्पदेसेसुं मुणिअणसमाउलेसुं आस्समेसुं भाईरहीतीरे बहुबिहमहाअणभूसिदेसुं णिउणं णिलुबेह्म कधम्पि महामोह भीदा पच्छन्नं पड़िबसदि ।

शान्तिः। सखि ! कियदन्विष्यते ।

नीवाराङ्कितसैकतानि सरितां कूलानि वैखानसै-

---

होमी नखलोमधारी वैखानसं तं प्रवदन्ति धीराः ॥ इति वैखानस-लक्षणम् । मामनालोक्येति । मया रहिता श्रद्धा मुहूर्त्तमपि न जीवति कामपि क्रियां मत्सान्निध्यं विना न करोतीत्याह मामनालोक्येति । सहि ! एब्बमिति । सखि ! एवं विषमज्वलनज्वालाशलाकादुःसहान्यक्षराणि जल्पन्ती सर्व्वथा विलुप्तजीवितां मां करोषि तत् प्रसीद मुहूर्त्तं जीवितं धारयतु प्रियसखी यावदितस्ततः प्रदेशेषु मुनिजनसमाकुलेषु आश्रमेषु भागीरथीतीरे बहुविधमहाजनभूषितेषु निपुणं निरूपयावः कथमपि महामोहभीता प्रच्छन्नं प्रतिवसति । इति स० । कियदन्विष्यत इति बहुतरान्वेषणं कृतमित्यर्थः । तदेव दर्शयति नीवारेति । निरूपिता इति लिङ्गव्यत्ययेन सर्व्वत्रान्वेति तथा च सरितां नदीनां कूलानि निरूपितानि

राक्रान्तानि समिद्ध्वसालचमसव्याप्ता गृहा यज्वनाम् ।
प्रत्येकञ्च निरूपिताः प्रतिपदं चत्वार एवाश्रमाः
श्रद्धायाः क्वचिदप्यहो सखि ! मया वार्त्तापि नाकर्णिता ॥

करु। सहि ! एवं भणामि सा जइ सच्चं ज्जेव सद्धा अत्थि तदो तारिसीए एरिसीं दुग्गदिं ण सम्भावेमि। ण हि तारिसीओ पुण्णभाइणीओ एरिसीं असम्भावणिज्जं विवत्तिं अणुभवन्ति ।

शान्तिः । सखि ! किमिह प्रतिकूले विधातरि न सम्भाव्यते तथा हि—श्रीर्देवी जनकात्मजा दशमुखस्यासीद्गृहे रक्षसो
नीता चैव रसातलं भगवती पूर्व्वं त्रयी दानवैः ।
गन्धर्वस्य मदालसाञ्च तनयां पातालकेतुश्छला-
द्दैत्येन्द्रोऽपि जहार हन्त ! विषमा वामा विधेर्वृत्तयः ॥

---

कीदृशानि वैखानसैराक्रान्तानि अत एव नीवाराङ्कितसैकतानि सिकतोत्थितपुलिनानामुञ्छवृत्त्यानीतपतितनीवारचिह्नितत्वात् । तथा यज्वनां गृहा निरूपिताः । ध्वसालचमसे यज्ञपात्रे । प्रत्येकमिति ब्रह्मचारी गृही वानप्रस्थो भिक्षुरित्याश्रमाश्चत्वार एषां निवासस्थानानि निरूपितानीत्यर्थः । अस्तु तावद्दर्शनं श्रद्धाया वार्त्तापि हे सखि ! क्वचिदपि नाकर्णिता इत्यर्थः अहो आश्चर्य्ये । सहीति । सखि ! एवं भणामि सा यदि सत्यमेव श्रद्धा अस्ति तदा तादृश्याः ईदृशीं दुर्गतिं न सम्भावयामि । इति स० । श्रद्धा अस्ति श्रद्धा भवतीत्यर्थः । ण हीति । न हि तादृश्यः पुण्यभागिन्य ईदृशीं असम्भावनीयां विपत्तिमनुभवन्ति । इति स० । श्रीर्देवीति । श्रीरेवावतीर्णा जनकात्मजा दशमुखस्य रक्षसोगृहे आसीत् पूर्व्वं दानवैर्भगवती त्रयी रसातलं नीता पातालकेतुर्दैत्येन्द्रोऽपि गन्धर्व्वस्य तनयां मदालसां छलाज्जहार । अतो हन्त ! खेदे विधेर्वृत्तयो व्यवसाया वामाः प्रति-

तद्भवतु पाषण्डालयेष्वेव तावत्तामनुसराव: ।

करु । [ सत्रासं ] रक्खसो रक्खसो ।

शान्तिः । क्वाऽसौ राक्षसः ।

करु । सहि ! पेक्ख पेक्ख एसो गलन्तमलपङ्कपिच्छिलवीहच्छदेहच्छवी उल्लुञ्चिअचिउरो मुक्कवसणवेसदुद्दसणो सिहिसिहण्डपिञ्छिआहत्थो इदो ज्जेव पड़िवट्टदि ।

शान्तिः । सखि ! नायं राक्षसः निर्वीर्य्यः खल्वसौ ।

करु । ता को एसो भविस्सदि ।

शान्तिः । सखि ! पिशाच इति शङ्के ।

करु । सखि ! एवं फुरन्तमहामऊखुब्भासिदभुअणन्तराले पज्जलदि पचण्डमात्तण्डमण्डले कधं पिसाआणं अवआसो ।

शान्ति: । सखि ! तर्ह्यनन्तरमेव नरकविवरादुत्तीर्णः कश्चिन्महानरकी भविष्यति [ विलोक्य विचिन्त्य च ] आं ज्ञातं मया,

---

क्रूरा विषमा अत्यन्तदुःखदायिकाः सर्व्वत्र पौराणिकी कथा अनुसन्धेया। सहीति । सखि ! राक्षसो राक्षसः । इति स० । सहीति । सखि ! पश्य पश्य एष गलन्मलपङ्कपिच्छिलबीभत्सदेहच्छविरुल्लुञ्चितचिकुरो मुक्तवसनवेशदुर्द्दर्शनः शिखिशिखण्डकपिञ्छिकाहस्त इत एव प्रतिवर्त्तते । इति स० । उल्लुञ्चितचिकुरो विकीर्णकेशः मुक्तवसनो दिगम्बरः स चासौ दुर्द्दर्शनश्चेति विग्रहः शिखिशिखण्डकस्य मयूरपक्षस्य पिञ्छिका व्यजनं तद्धस्तः । ता को इति। तत् क एष भविष्यति । इति स० । सहीति । सखि ! एवं स्फुरन् महामयूखोद्भासितभुवनान्तराले प्रज्वलति प्रचण्डमार्त्तण्डमण्डले कथं पिशाचानामवकाशः । इति स० । स्फुरद्भिर्महामयूखैरुद्भासितं भुवनान्तरालं येन तादृशे प्रचण्डमार्त्तण्डमण्डले ज्वलति सतीत्यर्थः । आं स्मरणे।

महामोहप्रवर्त्तितोऽयं दिगम्बरसिद्धान्तः।

[ ततः प्रविशति यथानिर्द्दिष्टः क्षपणकवेशो दिगम्बरसिद्धान्तः ]

क्षप। णमोऽलिहन्ताणं णवदुआलघलमज्झके अप्पा जलन्तदीपके।
एसे जिणवलभासिदे पलमत्थसोक्खमोक्खदे। [ इति परिक्रामति ]

[ आकाशे ] अलेले! साधआ! सुणाध।

मलमअपुग्गलपिण्डे सअलजलेहिं पि केलिसी सुद्धी।
अप्पा विमलसहावो लिसिपलिचलणेहिं जाणिदव्वो॥

किं भणाध केलिसं लिसिपलिचलणं त्ति।

दूले चलणपणामि किअसक्कालं भोअणं मिट्ठम्।

---

क्षपणकः परिव्राजकः। णमो इति। नमोऽर्हद्भ्यः नवद्वारगेहमध्ये आत्मा ज्वलद्दीपकः। एष जिनवरभाषितःपरमार्थसुखमोक्षदः। इति सं०। इयमपि। पैशाची भाषा। एतन्मते अर्हन्नामा ईश्वरः स एव च जिन एतच्छास्त्रप्रणेता ज्योतिषज्ञानञ्चैतच्छास्त्राद्भवतीति। एतच्छास्त्रप्रतिपाद्यमाह नवद्वारेति नवद्वारं गेहं शरीरं तन्मध्ये ज्वलद्दीपाकारः परमात्मा एष जिनवरेण परमार्थसौख्यमोक्षदो भाषित इत्यर्थः। वेदान्तिभिरुक्तसंसारमिथ्यात्वनिरासायोक्तं परमार्थेति। अलेले इति। अरेरे साधकाः! शृणुत मलमयशरीरपिण्डे सकलजलैरपि कीदृशी शुद्धिः। आत्मा निर्म्मलस्वभाव ऋषिपरिचरणैर्ज्ञातव्यः। इति सं०। साधकाः स्नानादिनियमेन देवतोपासकाः पुग्गलं शरीरेऽत्र भाषायाम्। अथात्मनः शुद्ध्यर्थं स्नानशौचादिकमित्यत्राह आत्मा विमलेति। ननु वेदप्रामाण्यानभ्युपगमाद्वेदोक्ता ऋषिपरिचर्य्या भवन्मते नास्त्येव ततश्च कीदृशी ऋषिपरिचर्य्येति साधकानां प्रश्नमाशङ्क्य अनुवदति किं भणाधेति। किं भणथ कीदृशं ऋषिपरिचरणमिति। इति सं०। साधकस्य प्रश्नोत्तरमाह दूले इति। दूरे चरणप्रणामः कृतसत्कारञ्च भोजनं मिष्टम्। ईर्ष्यामलं न कार्य्यं ऋषीणां दारान् रमयताम्। इति सं०। चरणप्रणामः कर्त्तव्य इति शेषः मिष्टं भोजनं दातव्यमिति शेषः भवतां दारान् रमयतां

ईसामलं ण कज्जं लिसीण दालान् लमन्ताणम् ॥

[ नेपथ्याभिमुखमवलोक्य ] सद्धे ! इदो दाव । [ उभे सभयमालोकयतः ]

[ ततः प्रविशति तदनुरूपवेशा: श्रद्धा ]

श्रद्धा । किं आणवेदि लाउले: [ शान्ति मूर्च्छिता भूतले पतति ]

रूप । सद्धे ! साधआणं कुलं मुहुत्तम्पि ण पलिच्चइस्ससि ।

श्रद्धा । जं आणवेदि लाउले [ इति निष्क्रान्ता ]

करु । समास्ससदु समास्ससदु पियसही ण क्खु णाम-मेत्तकेण पिअसहीए भेदव्वं जदो सुदं मए अहिंसासआसादो अत्थि पासण्डाणम्पि तमस्स सुदा सद्धा त्ति तेण एसा तामसी सद्धा हविस्सदि ।

शान्तिः । [ समाश्वस्य ] सखि ! एवमेतत् तथा हि—

दुराचारा सदाचारां दुर्दर्शा प्रियदर्शनाम् ।
अम्बामनुहरत्येषा दुराशा न कथञ्चन ॥

तद्भवतु सौगतेष्वेव तावदन्विष्यताम् [ इति परिक्रामतः ]

[ ततः प्रविशति भिक्षुकवेशः पुस्तकहस्तो बुद्धागमः ]

---

कर्मीणां स्थाने ईर्ष्यारूपं मलं न कर्त्तव्यमित्यर्थः । सद्धे इति । श्रद्धे ! इतस्ता-वत् । इति स० । किमिति किमाज्ञापयति माम्यः । इति स० । लाउले इति, माम्येऽस्यां भाषायाम् । सद्धे इति । श्रद्धे ! साधकानां कुलं मुहूर्त्तमपि न परित्यक्ष्यसि । इति स० । जमिति । यदाज्ञापयति माम्यः । इति स० । समास्ससदु इति । समाश्वसितु समाश्वसितु प्रियसखी न खलु नाममात्रकेण प्रियसख्या भेतव्यं यतः श्रुतं मया अहिंसासकाशादस्ति पाषण्डानामपि तमसः सुता श्रद्धेति तेन एषा तामसी श्रद्धा भविष्यति । इति स० । अहिंसाया आस्तिकनास्तिकोभयधर्मत्वादहिंसासकाशात् श्रवणम् । दुराचारेति । एषा तामसी श्रद्धा कथञ्चनापि समाम्बां सात्विकीं श्रद्धां नानुहरति न सदृशी-करोति विरुद्धधर्मत्वादित्याह दुराचारेति । साक्षात् चषेति । अत्र

भिक्षुः । [ विचिन्त्य ] साक्षात् क्षणक्षयिण एव निरात्मकाश्च

यत्रार्पिता वहिरिव प्रतिभान्ति भावाः ।
सैवाधुना विगलिताखिलवासनत्वा-
द्धीसन्ततिः स्फुरति निर्विषयोपरागा ॥

परिक्रम्य सश्लाघम् ] अहो ! साधुरयं सौगतो धर्म्मः यत्र सौख्यञ्च मोक्षश्च तथा हि ।

आवासो लयनं मनोहरमभिप्रायानुकूलावणि-
ङ्नार्य्यो वाञ्छितकालमिष्टमशनं शय्या मृदुस्रस्तरा ।
श्रद्धापूर्व्वमुपासिता युवतिभिः क्लृप्ताङ्गदानोत्सव-
क्रीड़ानन्दभरैर्व्रजन्ति विलसज्ज्योत्स्नोज्ज्वला रात्रयः ॥

करु । सहि ! को एसो तरुणतालतरुप्पलम्बो लम्बन्त-

---

मते वासनावशात्ज्ञानविलसितमात्रः संसारः वासनाविगमे तु निर्विषया ज्ञानधारैवावशिष्यते इति तदाह साक्षादिति यत्र धीसन्तानेऽर्पिताः साक्षात् क्षणक्षयिण एव भावा निरात्मका देहभिन्नात्मरूपपदार्थान्तररहिता वहिरिव ज्ञानभिन्ना इव प्रतिभान्ति सैव धीसन्ततिरधुना विगलिताखिलवासनत्वान्निर्विषयोपरागा रहिता स्फुरति अज्ञानदशायां विषयोपलम्भाभावाद्विषयासत्त्वाङ्गीकारेण भावानां क्षणक्षयित्वस्य साक्षात्त्वम् । मोक्षश्चेति देहात्मवादिनामेषां देहनाशस्यैव मोक्षत्वात् । सौख्यं दर्शयति आवास इति आवासो गृहं लीयते उपविश्यते अस्मिन्निति लयनमासनं द्वयमपि मनोहरं यन्मताविरुद्धमिति शेषः तथा वणिजां नार्य्यः हृन्दर्य्यः पण्यस्त्रियो वेश्या वा स्वाभिप्रायानुकूलास्तथा यथेष्टकालमिष्टमभीष्टमशनं भोजनं मृदुस्रस्तरा कोमलास्तरणा शय्या च यन्मताविरुद्धा इति शेषः । तथा युवतिभिः क्लृप्ता येऽङ्गदानोत्सवास्तद्रूपैः क्रीड़ानन्दभरैर्विलसज्ज्योत्स्ना रात्रयः श्रद्धापूर्व्वमुपासिता यथा श्रद्धामुपसिताः सेविता यान्ति यत्र मतइति शेष ईदृशसुखस्य तन्मताविरुद्धत्वात् । सहीति । सखि ! क एष तरुणताल-

कसाअचीरचीवरो मुण्डितसचूडमुण्डो इदो ज्जेव आअच्छदि

शान्तिः । सखि ! बुद्धागम एषः ।

भिक्षुः । भो भो उपासका भिक्षवश्च श्रूयतां भगवतः सुगतस्य वाक्यामृतं [ पुस्तकं वाचयति ] पश्याम्यहं दिव्येन चक्षुषा लोकानां सुगतिं दुर्गतिञ्च चणिकाः सर्व्वे भावा नास्त्यात्मा स्थायी तस्माद्भिक्षुषु परदारानाक्रमत्स्वपि नेर्ष्यितव्यं चित्तमलं हि यदीर्ष्या नाम ।

[ नेपथ्याभिमुखमवलोक्य ] श्रद्धे ! इतस्तावत् ।

[ प्रविश्य तदनुरूपा श्रद्धा । ]

श्रद्धा । आणवेदु लाउले ।

भिक्षुः । उपासकांश्च भिक्षूंश्च निर्भरमालिङ्ग्य स्थीयताम् ।

श्रद्धा । जं आणवेदि लाउले [ इति निष्क्रान्ता ]

शान्तिः । सखि ! इयमपि तामसी श्रद्धा ।

करु । एवणेदम् ।

चप । [ भिक्षुमालोक्य उच्चैः शब्दं कृत्वा ] अलेले ! भिक्षुआ ! इदो दाव किम्पि पुच्छिस्सम् ।

भिक्षु । [सक्रोधं] आः पाप ! पिशाचाकृते ! किमेवं प्रलपसि ।

चप । अले ! मुञ्च कोबं सत्थगदं किम्पि पुच्छिस्सम् ।

---

तदनु प्रलम्बो लम्बमानकषायचीरचीवरो मुण्डितसचूडमुण्ड इत एवागच्छति । इति सं० । तस्माद्भिक्षुष्विति यत आत्मा स्थायी नास्ति तस्मात् परलोकाभावे नेर्ष्यर्थः । आणवेदु इति आज्ञापयतु मान्यः । इति सं० । जमिति यदाज्ञापयति मान्यः । इति सं० । एवेति एवमेवेदम् । इति सं० । अलेले इति । अरेरे ! भिक्षुक इतस्तावत् किमपि प्रक्ष्यामि । इति सं० । अले इति ।

भिक्षुः । अरे क्षपणक ! शास्त्रकथामपि जानाति भवतु शृणुमस्तावत् [ उपसृत्य ] किं पृच्छसि ।

क्षप । भण दाव क्खणविणासिणा तए कस्स कदे व्वदं धालीअदि ।

भिक्षुः । अरे ! श्रूयतां अस्मत्सन्ततिपतितः कश्चिद्विज्ञान लक्षणः समुच्छन्नवासनो मोक्ष्यते ।

क्षप । अले मूक्ख ! जइ कस्मिम्पि मण्वन्तले कोबि मुक्को हविस्सदि तदो सम्पदं णट्ठस्स दे केलिसं उबआलं कप्पिस्सदि अण्णश्च पुच्छामि केण दे एलिसे धम्मे उबदिट्टे ।

भिक्षुः । ननु सर्व्वज्ञेन भगवता बुद्धेन ।

क्षप । अले ! सब्बण्णो बुद्धो त्ति कधं तए जाणिदम् ।

भिक्षुः । ननु तदागमादेव प्रसिद्धोऽयं वादो बुद्धः सर्व्वज्ञ इति ।

क्षप । अले ! उज्जुअबुद्धिआ जइ तस्स भासिदेण तस्स

---

शृणु कोपं शास्त्रगतं किमपि प्रक्ष्यामि । इति स० । भण दावेति । भण-तावत् क्षणविनाशिना त्वया कस्य क्ते व्रतं धार्य्यते ! इति स० । अस्मत् सन्ततीति । विज्ञानं विशेषज्ञानं तदीयमतसिद्धमुमुक्षुपयोगि ज्ञानं तल्लक्षण स्तत्सिद्धः वासना मिथ्याज्ञानं सन्ततिश्चैकधारा तत्पतितः कश्चिन्नैको-मोक्ष्यत इत्यर्थः । मुक्तिश्च देहात्मवादिनामेषां भूतचतुष्टयविशिष्टदेहधारा-विगमरूपं मरणमेव । अले इति । अरे मूर्ख ! यदि कस्मिन्नपि मन्वन्तरे कोऽपि मुक्तो भविष्यति तदा साम्प्रतं नष्टस्य ते कीदृश उपकारः कल्पिष्यते अन्यच्च पृच्छामि केन ते ईदृशो धर्म्म उपदिष्टः । इति स० । अले इति । अरे सर्व्वज्ञो बुद्ध इति कथं त्वया ज्ञातम् । अले इति । अरे ऋजुबुद्धे ! यदि तस्य भाषितेन

सव्वणुत्तणं पडिवज्जेसि तदो अहम्मि सव्वं जानामि तुमं मे पिदिपिदामहेहिं सत्तपुलुसेहिं दासो किदोसि त्ति ।

भिक्षुः । [ सक्रोधं ] आः पाप ! पिशाच ! मलपङ्कधर ! तवाहं दासः ।

क्षप । अले ! बिहालदासीभुअङ्गदुट्ठपरिव्बाअअ ! दिट्ठान्ते एसे मए दंसिदो ता पिअं दे भणामि बुद्धाणुसासणं पलिहलिअ अलिहन्ताण सासणं पविसन्तो दिगम्बलव्वदं जेव धालेदु भवम् ।

भिक्षुः । आः पाप ! स्वयं नष्टः परानपि नाशयितुमिच्छसि ।

स्वाराज्यं प्राज्यमुत्सृज्य लोकनिन्द्यामनिन्दितः ।
अभिवाञ्छति को नाम भवानिव पिशाचताम् ॥

अपि च अर्हतोऽपि सर्वज्ञत्वं कः श्रद्धत्ते ।

क्षपा । [ विहस्य ] अले ! गहणक्खत्तचालचन्दसुलोबलाअलुप्पलाहपलमत्थखाणसम्बादहं सणेण खादं सव्वणुत्तणं अलिहन्तस्स ।

भिक्षुः । [ विहस्य ] अरे ! अनादिप्रवृत्तज्योतिःशास्त्राती

---

तस्य सर्वज्ञत्वं प्रतिपद्यसे तदा अहमपि सर्वं जानामि त्वं मे पितृपितामहैः सप्तपुरुषैर्दासः कृतोऽसीति । इति स० । अले इति । अरे विहारदासीभुजङ्गदुष्टपरिव्राजक ! दृष्टान्तो मयैव दर्शितस्तत् प्रियन्ते भणामि बुद्धानुशासनं परिहृत्य अर्हदनुशासनं प्रविशन् दिगम्बरव्रतमेव धारयतु भवान् इति स० । स्वाराज्यमिति । प्राज्यं प्रकृष्टं स्वाराज्यं स्वर्गाधिपत्यमुत्सृज्य अनिन्दितः को नाम लोकनिन्द्यां पिशाचतामभिवाञ्छति भवानिवेत्यर्थः । अले इति । अरे ! ग्रहनक्षत्रचारचन्द्रसूर्योपरागलुप्तलाभपरमार्थज्ञानसम्वाददर्शनेन ज्ञातं सर्वज्ञत्वमर्हतः । ज्योतिः शास्त्रातीन्द्रियेति

न्द्रियज्ञानप्रतारितेन भवतैवेदमतिकष्टव्रतमाश्रितं तथा हि—

ज्ञातुं वपुःपरिमितः क्षमते त्रिलोकीं
जीवः कथं कथय सङ्गतिमन्तरेण ।
शक्नोति कुम्भनिहितः सुशिखो न दीपो
भावान् प्रकाशयितुमप्युदरे गृहस्य ॥

तस्माल्लोकत्रयविरुद्धत्वादार्हतो मताद्वरं सुगतदर्शनमेव साक्षात्सुखावहमतिरमणीयं पश्यामः ।

शान्तिः । सखि ! अग्रतो गच्छावः ।

करु । एवं भोदु [ इति परिक्रामतः ]

[ ततः प्रविशति कापालिकरूपधारी सोमसिद्धान्तः ]

सोम । [ परिक्रम्य ]

नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः ।
पश्यामि योगाञ्जनशुद्धदर्शनो जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥

---

ज्योतिःशास्त्राधीनातीन्द्रियज्ञानप्रतारितेनेत्यर्थः । ज्ञातुमिति वपुषा परिमितः परिच्छिन्नो भवदुक्तदीपकलिकारूपो वपुर्मध्यवर्त्ती जीव आत्मा कथं त्रिलोकीं ज्ञातुं सङ्गतिं प्रत्यासत्तिं विना क्षमते तत् कथय कुम्भनिहितः सुशिखोऽपि दीपो गृहस्योदरेऽपि भावान् पदार्थान् प्रकाशयितुं न शक्नोति स्वीयशिखासङ्गत्यभावादित्यर्थः । अतः शरीरपिहित आत्मा कथं स्वासन्निकृष्टान् भावान् भासयतीत्यर्थः । न चैवं बुद्धस्यापि कथं सर्वज्ञत्वमिति वाच्यं तस्येश्वररूपत्वेन संसारिपरिच्छिन्नत्वानङ्गीकारात् संसारिशरीराणां निरात्मकत्वात् । बुद्धशरीरे तु सर्वज्ञेश्वराधिष्ठानमात्रं न तु दीपकलिकाकारतया शरीरान्तर्वर्त्तित्वमिति भावः । वरं श्रेष्ठम् । सोमसिद्धान्त इति उमया सह वर्त्तमानः सोमो महेशः तत्सिद्धान्त इत्यर्थः । इदमप्युपनिषद्विरुद्धायाः शरीरसत्त्वे मुक्तेर्बोधनाद्वेदविरुद्धागमरूपत्वाच्च नास्तिकशास्त्रम् । नरास्थीति । मिथः परस्परं भिन्नमपि जगदीश्वरान्महेशादभिन्नं पश्यामि यतोऽहं योगाञ्जनेन शुद्ध-

क्षप । अले! एसे पुलुसे कवालव्वदं धालेदि ता णं पुच्छिस्सं [ उपसृत्य ] अले कावालिआ! णलमुण्डधालिआ केलिसे तुह सोक्खमोक्खे ।

कापा । अरे क्षपणक! धर्म्मं तावदस्माकमवधारय ।

मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां
वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा ।
सद्यः कृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलै-
रर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः ॥

भिक्षुः । [कर्णौ पिधाय] बुद्ध बुद्ध अहो दारुणा धर्म्मचर्य्या ।

क्षप । अलिहन्त! अलिहन्त! अहो! घोलपावकालिणा केण वि विप्पलद्धे एसे वलाए ।

---

दर्शनः दर्शनमत्र चक्षुः जगत ईश्वराभिन्नत्वेन दर्शनादात्मनोऽपीश्वराभिन्नत्वदर्शनेन ईश्वरवेद्यत्वमात्मन आह नरास्थिमालेति महेशस्यैवंरूपत्वात्। अले इति। अरे एष पुरुषः कपालव्रतं धारयति तदेनं प्रेक्ष्यामि । इति स० । अले इति । अरे कापालिक! नरमुण्डधारक! कीदृशौ तव सौख्यमोक्षौ । इति स० । सौख्यं सुखम् । मस्तिष्क इति । ब्रह्मकपाले ब्राह्मणमुण्डास्थिखण्डे कल्पितायाः सुरायाः पानेन नोऽस्माकं पारणा उपवासानन्तरभोजनं नः कीदृशानां मस्तिष्कं शारीरं तैलं तेनान्त्रवसया मज्जयाभिघारितानां सिक्तानां महामांसानां नरमांसानामाहुतीर्वह्नौ जुह्वतां तथा महाभैरवो देवो महेशो नोऽस्माकमर्च्यः अर्च्चनीयमाह पुरुषोपहारेति उपहृतबलिभिरित्यर्थः कीदृशैः सद्यःकृत्तो यः कठोरो दृढः कण्ठस्ततो विगलन्त्या कीलालधारया शोणितप्रवाहेणोज्ज्वलैर्भीषणैरित्यर्थः । दारुणेति अहिंसकत्वाद्बौद्धानाम् । अलिहन्त इति । अर्हन्नर्हन्! अहो! घोरपापकारिणा केनापि विप्रलब्ध एष वराकः । इति स० । वराको निकृष्टः । अपसदोऽधमः । वेदान्तेति वेदान्तैकदेशिशास्त्रप्रसिद्ध इत्यर्थः । हरिहरेति । हरिर्विष्णुर्हरो महेशः सुरज्येष्ठो ब्रह्मा एतान्

कापा । [ सक्रोधम् ] आः पाप ! पाषण्डापसद ! चण्डालवेश ! केशोल्लुञ्चक ! विप्रलम्भकः किल चतुर्द्दशभुवनोत्पत्तिस्थितिप्रलयकर्त्ता वेदान्तसिद्धान्तप्रसिद्धविभवो भगवान् भवानीपतिः । दर्शयिष्यामस्तर्हि धर्म्मस्य महिमानम् ।

हरिहरसुरज्येष्ठश्रेष्ठान् सुरानहमिहाहवे
वियति वहतां नक्षत्राणां रुणध्मि गतीरपि ।
सनगनगरामम्भः पूर्णां विधाय महीमिमां
कलय सकलं भूयस्तोयं क्षणेन पिबामि तत् ॥

क्षप । अदो ज्जेव भणामि केण वि इन्दआलिएण इन्दआलं दंसिअ विप्पलद्धेसि त्ति ।

कापा । [ सक्रोधम् ] आः पाप ! पुनरपि परमेश्वरमैन्द्रजालिकतयाक्षिपसि । [विचिन्त्य] तन्न मर्षणीयमस्य दौरात्म्यमिति

[ खड्गमाकृष्य ] एतत्करालकरवालनिकृत्तकण्ठ-
नालोच्छलद्बहुलबुद्बुदफेनिलोघैः ।
दत्त्वा डमड्डमरुडाङ्कृतिहूतभूत-
वर्गान्नु भर्गगृहिणीं रुधिरैर्धिनोमि ॥

---

सुरानहमिहाहवे आनयामि वियत्याकाशे वहतां चलतां नक्षत्राणां गतीरपि रुणध्मि प्रतिबध्नामि नगनगरसहितामिमां महीमम्भःपूर्णां विधाय सकलं तत्तोयं पिबाम्येतत् सर्वं कलय पश्येत्यर्थः । अदो ज्जेव इति । अत एव भणामि केनाप्यैन्द्रजालिकेनेन्द्रजालं दर्शयित्वा विप्रलब्धोऽसीति । इति सं० । तन्न मर्षणीयं न क्षमणीयम् । एतत् करालेति । सोऽहं डमदित्यव्यक्तशब्दकारिणो डमरोर्डामित्यव्यक्तशब्दकरणेन हूत आहूतो भूतवर्गो यया तादृशीं भर्गगृहिणीं महेशपत्नीं दुर्गां रुधिरैर्धिनोमि प्रीणयामीत्यर्थः । दत्त्वेति अर्थाद्रुधिराण्येव दत्त्वा रुधिरैः

इति । [ खड्गमुत्क्षिपति ]

क्षप । [ सभयम् ] महाभाअ ! अहिंसा पलमे धम्मे । [ इति भिक्षोरङ्कं प्रविशति ]

भिक्षु । [ कापालिकं वारयन् ] भो महाभाग ! कौतुकप्रयुक्ते वाक्कलहे न युक्तमेतस्मिंस्तपस्विनि प्रहर्त्तुम् ।

कापा । [खड्गं प्रतिसंहरं स्तिष्ठति] ।

क्षप । [समाश्वस्य] महाभाअ ! जइ संहलिअघोलरोसे संवुत्ते सि तदो पुणोवि किम्पि पुच्छिदुमिच्छामि ।

कापा । पृच्छ ।

क्षप । सुदं तुम्भाणं पलमे धम्मे अध केलिसे सोक्खमोक्खे ।

कापा । शृणु ।

दृष्टं क्वापि सुखं विना न विषयैरानन्दबोधोज्झिता

---

कीदृशैः करालेन भीषणेन करवालेन खड्गेन निकृत्ताच्छिन्नात् कण्ठनालादुच्चलद्भिरुच्छलद्भिर्बहुलबुद्बुदैः फेनिलः फेनायुक्त ओघः पयःप्रवाहो येषां तादृशैः । महेति महाभाग ! अहिंसा परमो धर्म्मः । इति सं० । महाभाअ इति । महाभाग ! यदि संहृतघोररोषः सम्वृत्तोऽसि तदा पुनरपि किमपि प्रष्टुमिच्छामि । इति सं० । सुदमिति । श्रुतं युष्माकं परमो धर्म्मः अथ कीदृशौ सौख्यमोक्षौ । इति सं० । दृष्टं क्वापीति । मुक्तो जनः चन्द्रचूड़वपुश्चन्द्रविशिष्टमौलिः सन् पार्व्वत्याः प्रतिरूपया दयितया सानन्दं यथा स्यात्तथा आलिङ्गितः सन् क्रीड़ति भवानीपतिर्महेश इत्यूचे ननु दयितादिकं विना तदालिङ्गनादिजन्यसुखतुल्यं सुखमेव मुक्तिरिति किं नोच्यत इत्यत आह दृष्टमित्यादि न विषयैरित्यन्तं विषयैर्दयितादिभिर्विना निर्विषयं सुखं क्वापि न दृष्टम् अतस्तादृशी न मुक्तिरिति भावः । सुखाद्यशेषविशेषशून्येच्छा मुक्तिः किं नोच्यते इत्यत आह आनन्देति । आनन्देन सुखेन बोधेन ज्ञानेन चोज्झिता

जीवस्य स्थितिरेव मुक्तिरुपलावस्था कथं प्रार्थ्यते।
पार्व्वत्याः प्रतिरूपया दयितया सानन्दमालिङ्गितो
मुक्तः क्रीड़ति चन्द्रचूड़वपुरित्यूचे भवानीपतिः ॥

भिक्षुः। महाभाग! अतीतरागस्य मुक्तिरित्यश्रद्धेयमेतत्।

क्षप। अले! कावालिआ! जइ ण लूससि ता भणामि सलीली मुक्को त्ति जुत्तिबिलुद्धम्।

कापा। [स्वगतम्] अये! अश्रद्धयाक्षिप्तमनयोरन्तःकरणं भवत्वेवं तावत् [प्रकाशम्] अश्रद्धे! इत स्तावत्।

[ततः प्रविशति कापालिकरूपधारिणी श्रद्धा]

करु। सहि! पेक्ख पेक्ख रअस्सदां सद्धां, जा एसा।
बिप्फुट्टणीलुप्पललोललोअना णरट्ठिमालाकिदचारुभूसणा।
णिअम्बपीणत्थणभारमन्थरा बिभादि पुस्सेन्दुमुही बिलासिणी ॥

श्रद्धा। [परिक्रम्य] एसह्मि आणवेदु सामी।

कापा। प्रिये! एनं दुरभिमानिनं भिक्षुं गृहाण।

श्रद्धा। [भिक्षुमालिङ्गति]

भिक्षु। [सानन्दं परिष्वज्य रोमाञ्चमभिनीय] अहो! सुखस्पर्शा कापालिनी तथा हि—

---

जीवस्यात्मनः स्थितिरेव मुक्तिरित्यपि नोच्यते इति शेषः तदमुक्तौ हेतुमाह उपलेति। तादृशी मुक्तिः शिलावस्थया स्थितिरूपैव सा कथं प्रार्थ्यत इत्यर्थः। अले इति। अरे कापालिक! यदि न रुष्यसि तदा भणामि शरीरी मुक्त इति युक्तिविरुद्धम्। इति सं०। सहीति। सखि! पश्य पश्य रजस्वलां श्रद्धां या एषा। विस्पष्टनीलोत्पललोललोचना नरास्थिमालाकृतचारुभूषणा। नितम्बपीनस्तनभारमन्थरा विभाति पूर्णेन्दुमुखी विलासिनी॥ इति सं०। भारेत्युभयत्र सम्बन्धान्नितम्बभारपीनस्तनभाराभ्यां मन्थरा मन्दगतिः।

रण्डाः पीनपयोधराः कति मया चण्डानुरागाद्भुज-
द्वन्द्वापीड़ितपीवरस्तनभरं नोन्गाढमालिङ्गिताः ।
बुद्धेभ्यः शतशः अपि यदि पुनः कुत्रापि कापालिनी-
पीनोत्तुङ्गकुचावगाहनभवः प्राप्तः प्रमोदोदयः ॥

अहो ! पुण्यं कापालिकदर्शनं, अहो ! श्लाघ्यः सोमसिद्धान्तः, आश्चर्य्योऽयं धर्म्मः, भो महाभाग ! सर्व्वथा बुद्धानुशासनमस्माभिरुत्सृष्टं प्रविष्टाः स्म पारमेश्वरं सिद्धान्तं तदाचार्य्यस्त्वं शिष्योऽहं प्रवेशय मां पारमेश्वरीं दीक्षाम् ।

क्षप । अले भिक्खुआ ! काबालिणीप्पंसदूसिदे तुमं ता दूलं ओसल ।

भिक्षुः । आः पाप ! वञ्चितोऽसि कापालिन्याः परीरम्भमहोत्सवेन ।

कापा । प्रिये ! क्षपणकं गृहाण ।

श्रद्धा । [ क्षपणकमालिङ्गति ]

क्षप । [सरोमाञ्चम्] अलिहन्त ! अलिहन्त ! अहो ! काबा-

---

एषह्मि इति एषास्मि आज्ञापयतु स्वामी । इति स० । रण्डा इति । मया चण्डानुरागात् पीनपयोधराः कति रण्डा विधवा उन्नाढं दृढं नालिङ्गिताः तत्र तथापीति तदेत्यपीति शेषः तथापि तदा बुद्धेभ्यः शतशः शपे बुद्धशपथं शतशः करोमीत्यर्थः यदि पुनः कुत्रापि कापालिन्याः पीनोत्तुङ्गकुचयोरवगाहनभवः प्रमोदोदयः प्राप्त इत्यर्थः । शप इति स्वाङ्गस्पर्शपूर्वकोऽयं शपथः तेन शपथे शप इत्यात्मनेपदं तत्पूर्वकत्वाभावे तु सख्यः शपामि यदि किञ्चिदपि करामीत्यादौ परस्मैपदमेव । अले इति । अरे भिक्षो ! कापालिनीस्पर्शदूषितस्त्वं तद्दूरमपसर । इति स० । आमिति जानामीत्यर्थः । अलिहन्त इति । अर्हन्नर्हन्नहो ! कापालिनीस्पर्शसुखं सुन्दरि ! देहि तावत्

लिणीप्पं ससुहं सुन्दलि ! देहि मे दाव पुणो वि अङ्कवालिम्। [ स्वगतम् ] महान्त क्खु इन्दियविआले उवत्थिदे ता किं एत्थ कलेमि भोदु पिञ्जिआए ढक्किस्सम् [ तथा कृत्वा ]

अइ पीणघणत्थणमोहिणि ! पलितत्थकुलङ्गविलोअणि !
जइ लमसि कबालिणि ! भावकी ता कीस कलिस्सदि सावकी॥
अहो ! कावालिअदंसनं एक्कं सोक्खमोक्खसाहणं भो आचालिअ ! हक्के तुह सम्पदं दासके संवुत्ते मं पि महाभैलवाणुसासणे दीक्खस्स।

कापा। उपविश्यताम्। [ उभौ तथा कुरुतः ]

कापा। [ भाजनमादाय ध्यानं नाटयति ]

श्रद्धा। भअवं ! पूलिदं भाअणं सुलाए।

कापा। [ पीत्वा शेषं भिक्षुक्षपणकयोरर्पयति ]

इदं पवित्रममृतं पीयतां भवभेषजम्।

---

पुनरप्यङ्कपालिम्। इति स०। महान्त इति। महान् खलु इन्द्रियविकार उपस्थितः तत् किमत्र करोमि भवतु पिञ्छिकया ढौकयिष्यामि। इति स०। इन्द्रियविकारः शिश्नोद्गमः दिगम्बरत्वात् उपायं चिन्तयति किं करोमीति। अइ इति। अयि पीनघनस्तनमोहिनि ! परित्रस्तकुरङ्गविलोचने ! यदि रमसे कपालिनि ! भावकी तत् कीदृशं करिष्यति श्रावकी। इति स०। भावकी भावविशिष्टा सम्बन्धेऽकण्। श्रावकी भिक्षुः क्षुद्राऽस्मदीया श्रद्धेति शेषः। अस्मदीया श्रद्धा क्षुद्रा एतत् प्रतिकूलं किमाचरिष्यतीत्यर्थः। अहो इति अहो ! कापालिकदर्शनमेकं सौख्यमोक्षसाधनं भो आचार्य्य ! अहं ! तव साम्प्रतं दासः संवृत्तः मामपि महाभैरवानुशासने दीक्षयस्व। इति स०। भअवमिति। भगवन् ! पूरितं सुरया भाजनम्। इति स०। इदं पवित्र-

पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥

[ उभौ विमृशतः ]

क्षप । अह्माणं अलिहन्ताणु सासणे सुलापाणं ण त्थि ।

भिक्षुः । कथं कापालिकोच्छिष्टां सुरां पास्यामि ।

कापा । किं विमृश्यते [ श्रद्धां प्रति ] प्रिये ! पशुत्वमनयोरद्यापि नापगच्छति तेनास्मद्वदनसंसर्गदोषादपवित्रां सुरामिती मनोते तद्भवती स्ववक्त्रासवपूतां कृत्वाऽनयोरर्पयतु यतस्तीर्थिकाः पठन्ति स्त्रीमुखं तु तदा शुचीति ।

श्रद्धा । जं आणवेदि भवं [ इति पानपात्रं गृहीत्वा पीतशेषमुपनयति ]

भिक्षुः । महानयं प्रसादः [ इति चषकं गृहीत्वा पिबति ] अहो ! सुरायाः सौरभं माधुर्य्यञ्च ।

निपीता वेश्याभिः सह कति न वारान् सुवदना
मुखोच्छिष्टाऽस्माभिर्विकचवकुलामोदमधुरा ।
कपालिनग्रा वक्त्रासवसुरभिमितान्तु मदिरा-

मिति । सुरैवेदममृतं भवभेषजं संसारव्याधिविनाशकमौषधं पशुपाशोऽस्मच्छास्त्रीयोक्तमार्गातिरिक्तमार्गानुसरणरूपः पशूनामिवाज्ञानां बन्धहेतुः पाशस्तत्समुच्छेदनकारणमित्यर्थः । अह्माणमिति । अस्माकमर्हदनुशासने सुरापानं नास्ति । इति स० । जं आणवेदीति यदाज्ञापयति भवान् । इति स० निपीता वेश्याभिरिति । अस्माभिः कति वारान् वेश्याभिः सह वेश्यारूपसुवदनामुखोच्छिष्टा सुरा न पीता अपि तु बहुवारान् पीतैव कीदृशी विकचानां विकसितानां वकुलानामिव आमोदेन गन्धेन मधुरा मनोहरा वयन्तु जानीमः सम्भावयामः यस्याः कपालिन्या वक्त्रासवेन सुरभिं सुगन्धि

मलब्ध्वा जानीमः स्पृहयति सुधायै सुरगणः।

क्षप। अले भिक्खुआ! मा सव्वं पिब कावालिणीव-
अणुच्छिट्ठं मदिलं धालेदु मम्।

भिक्षुः। [ क्षपणकाय चषकमुपनयति ]

क्षप। [ पीत्वा ] अहो! सुलाए महुलत्तणं अहो! सादो अहो! गन्धो अहो! सुलभित्तणं चिलं क्खु अलिहन्ताणुसासणे पडिदे वञ्चिदह्मि ईदिसेण सुलालसेण। अले! भिक्खुआ। घोलन्ति मे अङ्गाइं ता सुविस्सम्।

भिक्षुः। एवं कुर्व्वः [ इति तथा कुरुतः ]

कापा। प्रिये! अमूल्यक्रीतं दासद्वयं लब्धं तन्नृत्यावः [ इत्युभौ नृत्यतः ]

क्षप। अले! भिक्खुआ! एसे कावालिए अधवा आचालिए कावालिनीए सह सोहणं णच्चदि ता एदाए समं सोहणं अह्मे वि णच्चह्म [ इति मदस्खलितं नृत्यतः ]

क्षप। [ अइ पीणघणत्थणि इत्यादि गायति ]

---

एतां मदिरामलब्ध्वैव सुरगणः सुधायै स्पृहयति सुधां वाञ्छति एतल्लाभे तु सुधास्पृहां नाकरिष्यदित्यर्थः। अले इति। अरे भिक्षो! मा सर्वं पिब कापालिनीवदनोच्छिष्टां मदिरां धारय माम्। इति स०। धारय प्रापयेत्यर्थः। अहो इति। अहो! सुराया मधुरत्वम् अहो! स्वादः अहो! गन्धः अहो! सुरभित्वं चिरं खल्वर्हदनुशासने पतिता वञ्चिताः स्म ईदृशेन सुरारसेन। अरे भिक्षो! घूर्णयन्ति मे अङ्गानि तत् स्वपिमि। इति स०। सुरभिर्घ्राणतर्पण इति कोषात्। गन्धसुरभ्योः सामान्यविशेषयोः पृथगुपादानम्। अले इति। अरे भिक्षो! एष कापालिकः अथवा एष आचार्यः कापालिन्या सह शोभनं

भिक्षुः । आश्चर्य्यमेतद्दर्शनं यत्राक्लेशेनाभिमतार्थसिद्धयः सम्पद्यन्ते ।

कापा । कियदेतदाश्चर्य्यं पश्य ।

यत्रानुज्झितवाञ्छितार्थविषयासङ्गेऽपि सिद्ध्यन्त्यमू-
रत्यासन्नमहोदयप्रणयिनामष्टौ महासिद्धयः ।
वश्याकर्षणमोहनप्रमथनप्रक्षोभणोच्चाटन-
प्रायाः प्राकृतसिद्धयस्तु विदुषां योगान्तरायाः परम् ॥

क्षप । अले ! कावालिआ ! अधवा आचालिया ! अधवा लाउले !

भिक्षुः । [विहस्य] अयमनभ्यासपीतया मदिरया दूरमुन्मत्तीभूतस्तपस्वी तत् क्रियतामस्य मदापनयनम् ।

कापा । एवं भवतु [ स्वमुखोच्छिष्टं ताम्बूलं क्षपणकाय ददाति ]

---

न्त्यति तदेताभ्यां समं वयमपि न्त्यामः । इति स० । यत्रानुज्झितेति । यत्र मते प्रत्यासन्नमहोदयप्रणयिनां पार्वतीतुल्यदयितालिङ्गितचन्द्रचूडत्वप्राप्तिरूपासन्नमुक्तिमतां जनानां अनुज्झितो वाञ्छितो यो विषयस्तदासङ्गे सत्यपि अमूर्बुद्धिस्थाः प्रसिद्धा अणिमादयोऽष्टौ महासिद्धयः सिद्ध्यन्ति सम्पद्यन्ते वश्याकर्षणादयः प्राकृतसिद्धयः सामान्यसिद्धयस्तु परमतिशयं योगाभ्यासस्यान्तराया विघ्नभूता अतो योगमभ्यस्यतः पुंसस्तानि भवन्तीत्यर्थः । प्राया इत्यनेन मधुमत्याः सिद्धेः परिग्रहः । वश्यं वशी करणम् । आकर्षणमभीष्टवनितादेराकृष्य नयनम् । मोहनं परगुणानामेव ग्रहः । प्रमथनं वनितानां चित्तोन्मथनम् । प्रक्षोभणं वैरिणां भीतचित्तीकरणम् । उच्चाटनं वैरिणां देशत उन्मूलनम् । मधुमती द्विप्रकारा इच्छया सर्वभोग्यपदार्थोपस्थापनं परोक्षविषयसाक्षात्कारश्च । अले इति । अरे कापालिक ! अथवा आचार्य्य ! अथवा मान्य । इति

क्षप । [ हस्तीभूय ] आचालिअ ! एदं पुच्छामि जादिशी दे सुलाए आहलणसिद्धी तादिसी किं इत्थियापुलिसेसु वि अत्थि ।

कापा । किं विशेषेण पृच्छसि पश्य ।

विद्याधरीं वाप्यसुराङ्गनां वा नागाङ्गनां वाप्यथ यक्षकन्याम् ।
यद्यन्ममेष्टं भुवनत्रयेऽस्मिन् विद्याबलात्तत्तदुपाहरामि ॥

क्षप । भो ! एदं मए गणिदेण सादं जं सव्वे अह्मे महामोहस्स किङ्कला ।

उभौ । यथाज्ञातमायुष्मता ।

क्षप । ता लाअकज्जं मन्तीअदु ।

कापा । किन्तत् ।

क्षप । सत्तस्स सुदा सद्धा महालाअस्स आसाए आहलणीअदु त्ति ।

कापा । कथय क्वासौ दास्याः पुत्री एष तामचिरादेव विद्याबलादुपाहरामि ।

क्षप । [ कठिनीमादाय गणयति ]

शान्तिः । अम्बा गत एव हताशानामालापः श्रूयते तदवधानेन तावदालोकयावः ।

करु । सहि ! एवं करेह्म [ इति तथा कुरुतः ]

---

०। आचालिअ इति। आचार्य्य! एतत् पृच्छामि यादृशी ते सुराया आहरणसिद्धिस्तादृशी किं स्त्रीपुरुषेष्वप्यस्ति। इति स०। विद्याधरी इति। कन्यामित्यन्तेन विद्याबलादुपाहरामीत्यन्वयः तथा यद्यन्ममेष्टं अस्मिन् भुवनत्रये तत्तदपि विद्याबलादुपाहरामीत्यन्वयः। भो एदमिति। भो इदं मया गणितेन ज्ञातं यत् सर्व्वे वयं महामोहस्य किङ्कराः। इति स०। ता इति। तद्राजकार्य्यं मन्त्र्यताम्। इति स०। सत्तेति। सत्वस्य सुता श्रद्धा महाराजस्याज्ञया आहरणीया। इति स०। आगतः अस्मन्मार्ग्गतः। सहीति। सखि! एवं कुर्व्वः। इति स०।

क्षप । ण त्थि जले णत्थि त्थले णत्थि अ गअणे
ण त्थि पाआले विसुभत्तीए सहिदा अत्थि हिअए महप्पाणम् ।

करु । [सानन्दं] सहि ! दिट्ठिआ वड्ढसि विसुभत्तीए पासवत्तिणी सद्धा त्ति ।

शान्तिः । [हर्षं नाटयति]

भिक्षुः । अथ धर्मस्य कामादपक्रान्तस्य कुत वृत्तिः ?

क्षप । [पुनर्गणयित्वा]ण त्थि जले ण त्थि त्थले[इत्यादि पुनः पठति]

कापा । [सविषादम्] अहो ! महत्कष्टमापतितं महाराजस्य तथा हि—

मूलं देवी सिद्धये विष्णुभक्तिस्ताञ्चेच्छ्रद्धानुद्रुता सत्वकन्या ।
कामान्मुक्तस्तत्र धर्मोऽप्यभूच्चेत् सिद्धं मन्ये तद्विवेकस्य साध्यम् ।

तथापि अर्थव्ययेनापि स्वामिनः प्रयोजनमनुष्ठेयं तन्महाभैरवीं विद्यां धर्मश्रद्धयोराहरणाय प्रेषयामः [इति निष्क्रान्ताः]

शान्ति । आवामप्येवं हताशानां व्यवसितं देव्यै विष्णुभक्त्यै निवेदयावः [इति निष्क्रान्ते]

[ इति पाषण्डविडम्बनो नाम तृतीयोऽङ्कः ]

---

नत्थीति । नास्ति जले नास्ति स्थले नास्ति च गगने नास्ति पाताले विष्णुभक्त्या सहिता अस्ति हृदये महात्मनाम् । इति सं० । सहीति सखि ! दिष्ट्या वर्द्धसे विष्णुभक्त्याः पार्श्ववर्त्तिनी श्रद्धा । इति सं० नाटके दिष्ट्या वर्द्धसे इति आनन्द निवेदने भाषा आनन्दिता भवसीत्यर्थः मूलमिति । देवी विष्णुभक्तिः सिद्धये अर्थात् प्रबोधचन्द्रोदयरूपायै विवेक सिद्धये मूलं प्रबोधकारणं सत्वकन्या श्रद्धा ताञ्चेदनुद्रुताऽनुगता धर्म्मः तत्र कामान्मुक्तः स त्वभूच्चेत्तदा विवेकस्य साध्यं सिद्धं मन्ये इत्यर्थः अर्थव्ययेन प्राणव्ययेन ।

इति प्रबोधचन्द्रोदयटीकायां तृतीयाङ्कविवरणम् ।

---

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति मैत्री ]

मैत्री । सुदं मए मुदिआसआसादो जधा महाभैलवीदंसणसम्भमादो भअवदीए विसुभत्तीए पड़ित्तादा पिअसही सद्धा त्ति ता उक्कण्ठिदेन हिअएण कहिं तं पेक्खिस्सं [ इति परिक्रामति ]

[ततः प्रविशति श्रद्धा सभयोत्कम्पम्]

घोरां नारकपालकुण्डलवतीं विद्युच्छटां दृष्टिभि-
र्मुञ्चन्तीं विकरालमूर्त्तिमनलज्वालापिशङ्गैः कचैः ।
दंष्ट्राचन्द्रकलाङ्कुरान्तरललज्जिह्वां महाभैरवीं
पश्यन्त्या इव मे मनः कदलिकेवाद्याप्यहो वेपते ॥

---

चतुर्थाङ्के महाभैरवीसमाक्रम्यमाणायाः श्रद्धाया विष्णुभक्त्या त्राणं ततो महामोहविजयाय विवेकेन स्वसैन्यप्रेरणम् । मैत्री सर्व्वभूतमित्रता । सुदमिति । श्रुतं मया मुदितासकाशात् यथा महाभैरवीदर्शनसम्भ्रमात् भगवत्या विष्णुभक्त्या परित्राता प्रियसखी श्रद्धेति तदुत्कण्ठितेन हृदयेन कुत्र तां प्रेक्षिष्ये । इति स० । मोद एव मुदिता सर्व्वदा हृष्टत्वमित्यर्थः । घोरामित्यादि । अद्यापि महाभैरवीं पश्यन्त्या इव मे मनोऽहो ! कदलिकेव वेपते कीदृशीं घोरां भीषणां नरसम्बन्धिकपालकुण्डलवतीं दृष्टिभिर्विद्युत इव छटां कान्तिं मुञ्चन्तीं अनलज्वालाभिरिव पिशङ्गैः पिङ्गलैः कचैर्विकराला विभीषणा मूर्त्तिर्यस्यास्तादृशीं दंष्ट्रैवाकारसाम्याच्चन्द्रकला सैव चाकार-

मैत्री। [विलोक्य] अए! एसा पिअसही सद्धा भअसम्भन्तहिअआ कदलिआ कल्पतरलेहिं अङ्गेहिं किम्पि मन्तअन्ती सम्मुहागदम्पि मं ण पेक्खदि ता उवसप्पिअ आलावइस्सं णम्। [इत्युपसृत्य] पिअसहि सद्धे! कीस दाणिं तुमं उदआहिदहिअआ सम्मुहागदम्पि मं ण विलोअअसि।

श्रद्धा। [विलोक्य सोच्छ्वासम्] अये! प्रियसखी मैत्री।

> कालरात्रिकरालास्यदन्तान्तर्गतया मया।
> दृष्टासि सखि! सैव त्वं पुनरत्रैव जन्मनि॥

तद्गाढ़ं परिष्वजस्व माम्।

मैत्री। [तथा कृत्वा] सहि! तधा विसुभत्तीणिब्भत्सिदप्पहावाए महाभैरवीए कीस अज्जवि वेवन्ति दे अङ्गाइं।

श्रद्धा। [घोरामित्यादि पुनः पठति]

मैत्री। [सत्रासम्] अहो! हदासाए घोरं दंसणं अध ताए आगदाए किं कदं।

श्रद्धा। सखि: शृणु।

---

साष्यादङ्कुरस्तदन्तरे तच्छिद्रे ललज्जिह्वां लोलमानजिह्वाम्। अए इति। अये! एषा प्रियसखी श्रद्धा भयसम्भ्रान्तहृदया कदलिकाकल्पतरलैरङ्गैः किमपि मन्त्रयन्ती सम्मुखागतामपि मां न प्रेक्षते तदुपसृत्यालापयिष्याम्येनाम्। इति सं०। पिअसहीति। प्रियसखि श्रद्धे! किमिदानीं त्वं उदकाहितहृदया सम्मुखागतामपि मां न विलोकयसि। इति सं०। उदकाहिताहृदया उत्क्षिप्तमनस्का। कालरात्रीति। कालरात्रेर्मृत्योर्यत् करालं भीषणमास्यं तदीयदन्तानामन्तःमध्ये प्रविष्टया मया हे सखि! सैव पूर्वं दृष्टेव त्वमत्रैव जन्मनि पुनर्दृष्टासीत्यर्थः। सहीति। सखि! तथा विष्णुभक्तिनिर्भर्त्सितप्रभावया महाभैरव्या किमद्यापि वेपन्ते तेऽङ्गानि। इति सं०। अहो इति। अहो! हताशाया घोरं दर्शनं अथ तया आगतया किं कृतम्। इति सं०। श्येना वेति।

श्येनावपातमभिपत्य पदद्वये मा-
मादाय धर्म्ममपरेण करेण घोरा ।
वेगेन सा गगनमुत्पतिता नखाग्र-
कोटिस्फुरत्पिशितपिण्डयुतेव गृध्री ॥

मैत्री । हद्धी ! हद्धी ! [ इति मूर्च्छिता पतति ]

श्रद्धा । सखि ! समाश्वसिहि ।

मैत्री । [ समाश्वस्य ] तदो तदो ।

श्रद्धा । ततः परं मदीयार्त्तनादोपजाताद्रभावया देव्या विष्णुभक्त्या ।

भ्रूभङ्गभीमपरिपाटलदृष्टिपात-
मुन्नाढकोपकुटिलञ्च तथा व्यलोकि ।
सा वज्रपातहतशैलशिलेव भूमौ
व्याभुग्नजर्ज्जरतरास्थि यथा पपात ॥

मैत्री । दिट्ठिआ मईव्व साहूलमुहादो सद्धा क्खेमेण जीविदा पिअसही तदो तदो ।

---

श्येनवत् अवपातमभिपत्यागत्य मामर्थादेकेन करेणादायापरेण करेण धर्म्म-मादाय सा घोरा महाभैरवी वेगेन गगनमुत्पतिता नखाग्रकोटौ नखाग्रस्या-ग्रभागे स्फुरता पिशितपिण्डेन युता गृध्रीव । श्येनावपातमित्यत्र तद्वदतिपतनेनेत्यर्थः । हद्धीति । हा धिक् ! हा धिक् ! इति सं० । तदो इति । ततस्ततः । इति सं० । भ्रूभङ्गेति । भ्रूभङ्गेन भीमः परिपाटलश्च दृष्टिपातो यत्र तादृशं यथा स्यादुन्नाढकोपेन कुटिलञ्च यथा स्यात्तथा मदीयार्त्तनादोपजाताद्रभावया विष्णुभक्त्या तथा तादृशं व्यलोकि यथा सा महाभैरवी वज्रपातहता शैलसम्बन्धिशिलेव भूमौ पपात व्याभुग्नं जर्ज्जरतरमस्थि यत्र तादृशं स्यादिति पातक्रियाविशेषणम् । दिट्ठिया इति । दिष्ट्या मृगीव शार्दूलमुखात् श्रद्धा क्षेमेण जीविता प्रिय-

श्रद्धा। ततो देव्या समुपजाताभिनिवेशमुक्तं एवमस्य दुरात्मनो महामोहहतकस्य मामप्यवज्ञाय प्रवर्त्तमानस्य समूलमुन्मूलनं करिष्यामीति आदिष्टा चाहं देव्या यथा गच्छ श्रद्धे! ब्रूहि विवेकं कामक्रोधादीनां विजयोद्योगः क्रियतां तदा वैराग्यस्य प्रादुर्भावो भविष्यति अहञ्च यथासमयं प्राणायामाद्यनुप्राणनेन युष्मत्सैन्यमनुग्रहीष्यामि ऋतम्भरादयश्च देव्यः शान्त्यादिकौशलेन उपनिषद्देव्या सङ्गतस्य भगवतः प्रबोधोदयमनुध्यास्यन्तीति तदहमिदानीं विवेकसन्निधिं प्रस्थिता। त्वं पुनः किमाचरन्ती दिवसानतिवाहयसि।

मैत्री। अह्मे विस्णुभत्तीए आणाए चत्तारिआओ बहिणिआओ विवेअसिद्धिकारणादो महप्पाणं हिअए वट्टह्म

[ संस्कृतमाश्रित्य ]

ध्यायन्ति मां सुखिनि दुःखिनि चानुकम्पां
पुण्यक्रियेषु मुदितां कुमतावुपेक्षाम्।

---

सखी ततस्ततः। इति स०। प्राणायामाद्यनुप्राणनेनेति प्राणायामादीनां अनुप्रेषणेनेत्यर्थः। ऋतम्भरादयश्चेति ऋतं सत्यमेव ऋतम्भरास्ता आदयो यासामिति विग्रहः। उपनिषद्देव्या सङ्गतस्येति तया सङ्गतस्यार्थाद्विवेकस्य सकाशाद्भगवतः परमपुरुषस्य यः प्रबोधोदयस्तमनुध्यास्यन्तीत्यर्थः। तथा चोपनिषत्सङ्गस्यानुत्पन्नत्वेऽपि न दोषः। अह्मे इति। वयं विष्णुभक्त्या आज्ञया चतस्रो भगिन्यो विवेकसिद्धिकारणान्महात्मनां हृदये वर्त्तामहे। इति स०। चतस्रो भगिन्यश्च मैत्रीमुदितानुकम्पोपेक्षारूपाः। महात्मनां हृदयस्थिता भवन्त्यः किं कुर्वन्तीत्यत आह ध्यायन्तीति। मां मैत्रीं सुखिनि जने दृष्टे ध्यायन्ति अनुशीलयन्ति महात्मानोऽत्र कर्त्तारः सुखिनि जने दृष्टे

एवं प्रसादमुपयाति हि रागलोभ-
द्वेषादिदोषकलुषोऽप्ययमन्तरात्मा ॥

तदेवं चतस्रो भगिन्यो वयं तदभ्युदयव्यापारेणैव वासरानतिवाहयामः कुत्रेदानीं प्रियसखी महाराजमवलोकयिष्यति।

श्रद्धा। देव्या चेदमुक्तं अस्ति राढाभिधानो जनपदस्तत्रैव च भागीरथीतीरपरिसरालङ्कारभूतचक्रतीर्थे मीमांसानुगतया मत्या किञ्चिद्वार्य्यमाणप्राणो व्याकुलेनान्तरात्मना विवेक उपनिषत्सङ्गमार्थं तपस्यतीति।

मैत्री। ता गच्छदु पिअसही अहं उण सकं णिओअं अणुचिट्ठम्हि।

श्रद्धा। एवं भवतु [इति निष्क्रान्ते प्रवेशकः]

[ततः प्रविशति राजा प्रतिहारी च]

राजा। आः पाप मोहहतक! सर्व्वथा हतस्त्वयाऽयं महाजनो यतः।

---

तत्र मित्रव्यवहारमाचरन्तीत्यर्थः। एवमुत्तरत्रयेऽपि बोध्यं मुदितां मोदम्। ननु विष्णुभक्त्या युष्माद्दशीनामीदृशाज्ञा तावत् प्रबोधोदयार्थमुद्युक्तस्य विवेकस्यानुकूल्यार्थमित्युक्तं तदानुकूल्यञ्च ईदृशयुष्मदनुध्यानेन किं स्यादित्यत्राह एवं प्रसादमिति अयमुत्पत्स्यमानप्रबोधोऽन्तरात्मा रागलोभादिकलुषोऽपि प्रसादं प्रबोधोदयोपयुक्तं प्रसादं उपयातीत्यर्थः। मीमांसानुगतयेति असदनुव्याशङ्कया मीमांसानुगतया सदनुविमर्शयेत्यर्थः। प्राणधारणस्य किञ्चित्त्वञ्च महामोहाद्यभिभवाद्बोध्यम्। ता इति। तद्गच्छतु प्रियसखी अहं पुनः स्वकं नियोगं अनुतिष्ठामि। इति सं०। प्रवेशक इति श्रद्धामैत्रीद्वयप्रयोज्यत्वात्। राजा विवेकः। शान्त इति। अमृतसागराम्भस्यर्थात् समस्तभिन्नतया ध्येयरूपे ब्रह्मणि मग्नोऽपि तादृग्ध्यानविषयोऽपि अयं महाजनो ब्रह्मस्वरूपः परमात्मा नाचामत्यर्थात्

शान्तेऽनन्तमहिम्नि निर्म्मलचिदानन्दे तरङ्गावली-
निर्म्मुक्तेऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति ।
निःसारे मृगतृष्णिकार्णवजले श्रान्तो विमूढः पिब-
त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥

अथ वा संसारचक्रवाहकस्य महामोहस्याबोधमूलं तस्य च प्रबोधोदयादेव निवृत्तिर्यतः ।

अमुष्य संसारतरोरबोधमूलस्य नामूलविनाशनाय ।
विश्वेश्वराराधनवीजजाततत्त्वप्रबोधादपरोऽभ्युपायः ॥

प्रायशः कृतिनां कार्य्ये देवा यान्ति सहायतामिति पुराविद उदाहरन्ति तथा देव्या विष्णुभक्त्या सन्दिष्टं यथोद्योगः कामा-

---

स्वात्मकममृतसागरजलं नाचामति॰न पिबति तादृशध्यानाधीनसाक्षात्कारविषयं नात्मानं लभत इत्यर्थः कीदृशे ब्रह्मरूपे अमृतसागराम्भसि शान्ते विषयव्यावृत्ते सागराम्भःपक्षे शान्ते निश्चले अनन्तमहिम्नि अद्वितीयत्वात् व्यापके पक्षे महापरिमाणे निर्म्मलं चिदात्मविषयकं ज्ञानं तत्स्वरूपानन्दरूपे पक्षे निर्म्मलं चिदानन्दं चित आनन्दो यस्मात्तादृशश्चेति कर्म्मधारयः तेन तादृशे निर्म्मले मनस आनन्दजनके चेत्यर्थः तरङ्गावली अभिभवैकत्वेन रागद्वेषादिरूपा तन्निर्म्मुक्ते स्वभावतस्तादृशत्वात् पक्षे तु शान्तत्वेनैव तथात्वं बोध्यम् । निःसारे इति संसारस्य जाग्रत्स्वप्नत्वेनालीकरूपे मृगतृष्णिकार्णवजले मृगतृष्णिकायामवगतार्णवजलप्रायालीके संसारे विमूढो मोहाभिभूतः श्रान्तो दुःखभाजनं पिबतीत्यादि अत्यन्तासक्तो भवतीति सकलक्रियार्थः । अथवा संसारेति । संसारचक्रवाहकस्य संसारचक्रप्रवर्त्तकस्य महामोहस्य तत्त्वज्ञानविरोधिज्ञानस्य मूलं प्रधानकारणं अबोधस्तत्त्वज्ञानविरहः प्रतियोगिनस्तत्त्वबोधादेव तस्य निवृत्तिरित्यर्थः । यत इति यश्चेत्यर्थे बोध्यम् अमुष्येत्यादेः पूर्वोक्तहेत्वभावात् तथा च अबोधमूलस्य अमुष्य संसाररूपतरोरामूलविनाशनाय उपायो विश्वेश्वराराधनरूपवीजजाततत्त्वप्रबोधान्नापरो यथा तथा महामोहनिवृत्तेरपि तत्त्वप्रबोधादपरो नोपाय इत्यर्थः । अहमपीति अहं विष्णुभक्तिः । विष्णुभक्तिसन्देशमनूद्य विवेकः

दिग्विजयाय क्रियतामिति अहमपि तदर्थं गृहीतपक्षेति तत्र कामस्तावद्वस्तुविचारेण जीयते तद्भवतु तमेव कामनिर्जयाय प्रेषयामि । [पार्श्वतोऽवलोक्य] वेत्रवति ! आहूयतां वस्तुविचारः ।

प्रती । जं देवो आणवेदि [इति निष्क्रम्य वस्तुविचारेण सह प्रविशति]

वस्तु । अहो ! निर्विचारसौन्दर्य्याभिमानवर्द्धिष्णुना कामहतकेन वञ्चितं जगत् अथवा दुरात्मना महामोहहतकेनैव तथा हि—

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युल्लसत्-
पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो कामस्य दुश्चेष्टितम् ॥

अपि च । यथावस्तु विचारयताममन्दमतीनामपि पिशितपङ्कावनद्धास्थिपञ्जरमयी स्वभावतो दुर्गन्धबीभत्सवेशा नारीति नास्ति विरतिर्यत्र च स्पष्ट एवेतरगुणाध्यास, स्तथा हि—

मुक्ताहारलता रणन्मणिमया हैमास्तुलाकोटयो

---

स्वयमाह तत्र काम इत्यादि । वेत्रवती द्वारपालिका स्त्री । निर्विचारसौन्दर्य्येति स्त्रीणां सौन्दर्य्यं विचारतो मिथ्येत्यर्थः । कान्तेति । प्रत्यक्षाशुचिपुत्रिकां मलमूत्रक्लेदाद्यशुचिकन्यकारूपां स्त्रियं दृष्ट्वा विद्वानपि जनः कान्तेत्यादिबुद्ध्या माद्यति प्रमत्तो भवति मोदते हृष्यतेऽभिरमते क्रीड़ति प्रस्तौति प्रशंसति अहो ! इदं कामस्य दुश्चेष्टितम् । कान्तेति कमनीयेति नीलोत्पलतुल्यलोचनेति पृथुनितम्बभरेति विनोद्यपृथुकुचेति शोभनमुखाम्भोजेति शोभनभ्रूरिति बुद्ध्या प्रमत्तादि । यथावस्त्विति । यथावस्तु यथार्थं वस्तु तद्विचारयताममन्दमतीनामपि पिशितेत्याद्युक्तरूपा नारीत्येवं बुद्ध्वापि कामहतवशान्नास्ति विरतिरित्यर्थः । इतरगुणेति इतरस्य हारादेर्गुणः सौन्दर्य्यादिः । मुक्ताहारेति । अहो !

रागः कुङ्कुमसम्भवः सुरभयः पौष्प्यो विचित्राः स्रजः ।
वासश्चित्रदुकूलमल्पमतिभिर्नार्य्यामहो कल्पितं
बाह्यान्तः परिपश्यतान्तु निरयो नारीति नाम्ना कृतः ॥

[ आकाशे ] आः ! पाप ! काम ! चण्डाल ! किमेवमनवलम्बनमाविर्भवता भवता व्याकुलीक्रियते महाजनः । तथा ह्ययमेवाभिमन्यते ।

बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते
नीलेन्दीवरलोचना स्तनपरीरम्भं भृशं वाञ्छति ।

अरे मूढ़ !

का त्वामिच्छति का च पश्यति पशो ! मांसास्थिभिर्न्निर्म्मिता
नारी वेद न किञ्चिदत्र स पुनः पश्यत्यमूर्त्तः पुमान् ॥

प्रती । इतो इतो [ इत्युभौ परिक्रामतः ]

---

अल्पमतिभिर्नार्य्यां मुक्ताहारलतादिकं सौन्दर्य्यहेतुतया कल्पितमित्यर्थः । तत्र हैमा हेमनिर्म्मितास्तुलाकोटयो नूपुराः चित्रदुकूलं वास आच्छादनमित्यर्थः एवं हारादिकं वाह्यं अन्तर्गतञ्च मलमूत्रादिकं पश्यतामर्थान्मनसि भावयतां विधात्रा नाम्ना कृतो निरयो नरकमित्यर्थः । अनवलम्बनं निर्विषयमित्यर्थः शरीररूपस्य विषयस्यालीकत्वादिति भावः । मांसास्थिपिण्डरूपत्वेन नार्य्या अलीकत्वं साधयितुं प्रथमं कामिनो नारीभ्रमं दर्शयति तथा ह्ययमिति ! अयं कामी जनः । बालेति । इयमिन्दुवदना बाला नारी मामिच्छति सानन्दं वीक्षते नीलेन्दीवरलोचना स्तनाभ्यां मम परीरम्भमालिङ्गनं वाञ्छतीत्ययं कामी जनो मन्यत इत्यर्थः । पुनः कामिजनं सम्बोध्याह अरे मूढेति ननु नार्य्येव पश्यतीत्यत आह मांसास्थिभिरिति मांसास्थिपिण्डरूपा नारी किञ्चिदत्र न वेद न जानाति अचेतनत्वात् यस्तु चेतनः पुमान् पश्यति सोऽमूर्त्तो दर्शनालिङ्गनाद्यविषय इत्यर्थः ।

प्रती। एसो महाराओ उपविट्ठो चिट्ठदि ता उअसप्पदु भवम्।

वस्तु। [उपसृत्य] जयति महाराजः एष वस्तुविचारः प्रणमति।

राजा। [ससम्भ्रमं] इहोपविश्यताम्।

वस्तु। [उपविश्य] देव! एष ते किङ्करः प्राप्तस्तदाज्ञयानुगृह्यताम्।

राजा। भद्र महामोहेनास्माकं प्रवृत्तः संग्रामस्तत्र च तस्य कामः प्रथमो वीरस्तस्य प्रतिवीरतयास्माभिर्भवानेव निरूपितः।

वस्तु। [सप्रमोदम्] धन्योऽस्मि येन स्वामिनाऽहमेवं सम्भावितः।

राजा। अथ कया शस्त्रविद्यया कामं जेष्यति।

वस्तु। आः पञ्चशरः पुष्पधन्वा कामो जेतव्य इत्यत्रापि शस्त्रग्रहणापेक्षा पश्य।

दृढ़तरमपिधाय द्वारमारात् कथञ्चित्
स्मरणविपरिवृत्तौ दर्शने योषितां वा।
परिणतिविरसत्वं देहबीभत्सतां वा
प्रतिमुहुरनुचिन्त्योन्मूलयिष्यामि कामम्॥

---

तिष्ठत्यमूर्त्त इत्यपि पाठः। एसो इति। एष महाराज उपविष्टस्तिष्ठति तदुपसर्पतु भवान्। इति सं०। दृढतरमिति। योषितां कथञ्चित् स्मरणविपरिवृत्तौ स्मरणस्य निष्पत्तौ सत्यां दर्शने वा सति द्वारमिन्द्रियरूपं द्वारमारादेवाव्यवहितकाल एवापिधायाच्छाद्य प्रतिमुहुर्वारंवारं हुरतस्य परिणतिविरसत्वं मलमूत्रादिमयत्वरूपदेहबीभत्सतां वा अनुचिन्त्य काम-

राजा । साधु साधु ।

वस्तु । अपि च ।

विपुलपुलिनाः कल्लोलिन्यो नितान्तपतज्झरा
मसृणितशिलाः शैलाः सान्द्रद्रुमा वनराजयः ।
यदि समगिरो वैयासिक्यो बुधैश्च समागमः
क्व पिशितवसामय्यो नार्य्यस्तथा क्व च मन्मथः ॥

अपि च । नारीति नाम प्रधानमस्त्रं कामस्य तेन तस्यां जितायां तत्सहायाः सर्व्वे एव विफलारम्भा भङ्गमापादयिष्यन्ते तथा हि—चन्द्रश्चन्दनमिन्दुधामधवला रात्र्यो द्विरेफावली
भङ्कारोन्मुखरा विलासविपिनोपान्ता वसन्तोदयाः ।
मन्द्रध्वानघनोदयाश्च दिवसा मन्दा कदम्बानिलाः

---

सुन्म् जयिष्यामीत्यर्थः । विपुलपुलिना इति । यद्येते सन्ति तदा पिशितवसामय्यो नार्य्यः क्व मनृमथो वा क्व नारीषत्त्वेऽपि मनृमथोदयो नास्तीत्यर्थः । कस्मिन् कस्मिन् सति मनृमथोदयो नास्तीत्याह विपुलेति बृहत्पुलिनाः कल्लोलिन्यो नद्यो यदि सन्ति तदा तत्पुलिन एव तपस्यतः क्व मनृमथ इत्यर्थः। एवमन्यान्यपि तपःस्थानानि । शान्तिहेतुवाक्यञ्चाह नितान्तेति शैला यदि सन्ति कीदृशाः नितान्तपतन्निर्झरप्रवाहा अत एव मसृणितशिलाः जलस्निग्धीकृत शिलाः निविड़द्रुमा वनराजयश्च वैयासिक्यो व्यासोक्ताः धर्मगिरश्च यदि सन्तीत्यर्थः । बुधैः सात्त्विकपण्डितैश्च सह यदि समागमस्तिष्ठतीत्यर्थः । चन्द्र इत्यादि । नार्य्यां जितायां चन्द्रादयः कामस्य सहाया जिता इत्यर्थः । तानाह चन्द्र इत्यादि इन्दुधाम्ना चन्द्रज्योत्स्नया धवला रात्र्यो द्विरेफावलीनां भङ्कारेण उन्मुखरा विलासविपिनस्य उपान्ताः तथा वसन्तस्योदयाः तथा मन्द्रो गभीरो ध्वानः शब्दो येषां तादृशानां घनानामुदयो येषु तादृशा दिवसा वार्षिकदिनानीत्यर्थः कदम्बपुष्पसम्बन्धिनोऽनिलाः

शृङ्गारप्रमुखाश्च काममुहृदो नार्य्यां जितायां जिताः॥

तदलमतिविलम्बेन आदिशतु स्वामी।

सोऽहं प्रकीर्णैः परितो विचारैः शरैरिवोन्मथ्य बलं परेषाम्।
सैन्यं कुरूणामिव सिन्धुराजं गाण्डीवधन्वेव निहन्मि कामम्॥

राजा। [सप्रसादम्] तत् सज्जीभवतु भवान् शत्रुविजयाय।

वस्तु। यथादिशति देवः [इति निष्क्रान्तः]

राजा। वेत्रवति! क्रोधस्य विजयाय क्षमैवाहूयताम्।

प्रती। जं देवो आणवेदि [इति निष्क्रम्य क्षमया सह प्रविशति]

क्षमा। [सधैर्य्यम्] क्रोधान्धकारविकटभ्रुकुटीतरङ्ग-
भीमस्य सान्ध्यकिरणारुणघोरदृष्टेः।

---

तथा शृङ्गाररसप्रधानाः कामस्य सुहृदो नारीणां हेलालीलादयो हावा अन्ये वा शून्यत्वासम्भ्रहादय इत्यर्थः। सोऽहमिति। सोऽहं वस्तुविचारः परितः प्रकीर्णैर्विचारैर्नारीदेहवीभत्सताप्रदर्शनरूपैः. परेषां सैन्यमुन्मथ्य कामं निहन्मि तत्रानेकेनशब्देर्दृष्टान्तमाह शरैरिवेत्यादि अहमित्यत्र गाण्डीवधन्वा अर्जुन इवेति दृष्टान्तः। एवं काममित्यत्र सिन्धुराजं जयद्रथमिवेति परेषामित्यत्र कुरूणामिवेति विचारैरित्यत्र शरैरिवेति। शरैः कुरूणां सैन्यमुन्मथ्य गाण्डीवधन्वा सिन्धुराजं यथा निजघान तथा विचारैः परेषां सैन्यमुन्मथ्य कामं निहन्मीत्यर्थः। जं देवो इति। यद्देव आज्ञापयति। इति सं०। क्रोधान्धकारेति। धीरा जनाः परस्य परिवादगिरः परकर्तृकपरिवादगिरो निन्दावाक्यानि सहन्ते परस्य कीदृशस्य क्रोधरूपान्धकारेण यो विकटो भ्रुकुटीतरङ्गस्तेन भीमस्य तथा सान्ध्यकिरणवदरुणा घोरा भीषणा दृष्टि-

निष्कम्पनिर्मलगभीरपयोधिधीरा
धीराः परस्य परिवादगिरः सहन्ते ॥

[ सश्लाघमात्मानं विचिन्त्य ] हंहो !

क्लमो न वाचां शिरसो न शूलं न चित्ततापो न तनोर्विमर्दः ।
न चापि हिंसादिरनर्थयोगः श्लाघ्या परं क्रोधजयेऽहमेका ॥

[ इत्युभे परिक्रामतः ]

प्रती । एसो देवो ता उबसप्पदु पिअसही ।

क्षमा । [ उपसृत्य ] जयति जयति देव एषा देवस्य दासी क्षमा साष्टाङ्गं प्रणमति ।

राजा । वत्से ! अत्रोपविश्यताम् ।

क्षमा । [ उपविश्य ] आज्ञापयतु देवः किमर्थमाहूतो दासीजनः ।

राजा । क्षमे ! अस्मिन् संग्रामे त्वया दुरात्मा क्रोधो जेतव्यः

क्षमा । देवस्य प्रसादेन महामोहमपि जेतुं समर्थास्मि किं पुनः क्रोधं तदनुचरमात्रं तदहमचिरादेव ।

तं पापकारिणमकारणबाधितारं

---

धीरेति धीराः कीदृशाः निष्कम्पा निर्मला गभीराः पयोधर इव धीरा-निर्विकाराः । क्लमो न वाचामित्यादि । परं केवलं क्रोधजयेऽहमेका श्लाघ्या प्रशस्ताधिकारिणी यतः परस्य क्रोधे सति मदधिष्ठितानां मौनावलम्बनात् वाचां सकाशात् क्लमः शिरसः शूलं व्यथा च न निन्दावाक्यश्रवणेन न चित्ततापोऽपि दन्तपीडनहस्तपीडनादिस्तनोर्वि-मर्दश्च न परहिंसादिरनर्थयोगश्च न आदिपदाद्द्वेषादिपरिग्रहः पाप-जनकत्वादनर्थता । एसो इति । एष देवस्तदुपसर्पतु प्रियसखी । इति सं० । तं पापकारिणमिति । तं पापकारिणं क्रोधमहं कात्यायनी

स्वाध्यायदेवपितृयज्ञतपःक्रियाणाम्।
क्रोधं स्फुलिङ्गमिव दृष्टिभिरुद्वमन्तं
कात्यायनीव महिषं विनिपातयामि॥

राजा। क्षमे! शृणुमस्तावत् क्रोधविजयोपायम्।

क्षमा। देव! विज्ञापयामि।

क्रुद्धे स्मेरमुखावधीरणमथाविष्टे प्रसादक्रमो
व्याक्रोशे कुशलोक्तिरात्मदुरितच्छेदोत्सवस्ताड़ने।
धिग्जन्तोरजितात्मनोऽस्य महती दैवादुपेता विप-
द्वर्वीरिति दयारसार्द्रमनसः क्रोधस्य कुत्रोदयः॥

राजा। साधु साधु।

क्षमा। देव! क्रोधविजयादेव हिंसापारुष्यमदमानमात्सर्य्यादयोऽपि विजिता एव भविष्यन्ति।

राजा। तत् प्रतिष्ठतां भवती तेषां विजयाय।

---

पार्वती महिषमसुरमिव विनिपातयामि कीदृशं स्वाध्यायस्य देवपितृयज्ञस्य तपःक्रियायाश्चाकारणबाधितारं क्रोधेन स्वीये तत्फलत्यागात् परकीये तत्फलविघाताच्च। दृष्टिभिः स्फुलिङ्गमिव क्रोधमुद्वमन्तं प्रकाशयन्तं क्रोधस्य पुरुषत्वेनारोपात् क्रोधस्तद्धर्म्मी उक्तः। क्रुद्धे स्मेरेति परस्मिन् क्रुद्धे सति मदधिष्ठितस्य स्मेरमुखं यथा स्यात्तथावधीरणं अथ स्मेरमुखप्रदर्शनात् परस्मिन् क्रोध एवाविष्टे सति प्रसादक्रमो व्याक्रोशे निन्दोक्तौ परेण कृतायां सत्यां तस्यैव कुशलप्रश्नरूपा कुशलोक्तिः परेण स्वस्मिंस्ताड़िते सत्यात्मदुरितच्छेदोत्सवो भोगेन दुरितनाशात्। अजितात्मनोऽस्य जन्तोर्महती विपत् क्रोधेन परताड़नरूपा दैवादुपेता तस्माद्धिगिति निन्दावाक्यम्। एवं दयारसार्द्रमनसः शान्तस्य पुरुषस्य स्थाने कुतः क्रोधस्योदयो मदधिष्ठितेनैवं कृते तं प्रति क्रोधो नोदयतीत्यर्थः।

क्षमा । यथादिशति देवः [ इति निष्क्रान्ता ]

राजा । [ प्रतीहारीं प्रति ] वेत्रवति ! आह्वयतां लोभस्य विजयाय सन्तोषः ।

प्रति । जं देवो आणवेदि [ इति निष्क्रम्य सन्तोषेण समं प्रविशति ]

सन्तो । [ विचिन्त्य सानुक्रोशम् ]

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
सुखस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥

[आकाशे] अरे मूर्ख ! दुरुच्छेदः खल्वयं भवतो व्यामोहस्तथा हि—समारम्भा भग्नाः कति कति न वारांस्तव पशो !
पिपासोस्तुच्छेऽस्मिन् द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न ते मूढ़ ! शतधा

---

जं देव इति । यद्देव आज्ञापयति । इति सं । सानुक्रोशमिति सानुक्रोशो निन्दा सा चार्थिषु तत्सहितं यथा स्यात्तथा वदतीत्यर्थः। फलं स्वेच्छेति । प्रति वनं वने वने क्षितिरुहां फलं स्वेच्छालभ्यं तथा च तेनैव क्षुन्निवृत्तिस्तथा स्थाने स्थाने पुण्यसरितामनिषिद्धजलपानसरितां शिशिरं मधुरञ्च पयः स्वेच्छालभ्य मित्यनुषङ्गस्तथा च तेनैव तृषानिवृत्तिस्तथा सुललितलतापल्लवमयी शय्या अर्थात् स्थाने स्थाने स्वेच्छालभ्या तथा च तयैव सुषुप्त्युपपत्तिस्तदपि तथापि धनिनां द्वारि कृपणा धनलिप्सवा कातरा जनास्तदवज्ञाधीनं सन्तापं सहन्त इत्यर्थः। अरे मूर्खेति सुखविरोधिधर्म्मलुब्धपुरुषस्य सम्बोधनं । समारम्भा इति । हे पशो ! द्रविणं धनं तदेवासारत्वान्मृगतृष्णा तद्रूपेऽर्णवजले तुच्छेऽनुपादेये पिपासोस्तव कति कति वारान् धनप्राप्तिसमारम्भा न भग्ना अपि तु भग्ना एव, तथापि ते प्रत्याशा न विरमति अतो हे मूढ ! तव चेतो यत् शतधा

न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥

अपि च, इदञ्च लोभानुचेष्टितं चेतसि चमत्कारमातनोति यतः—

एतल्लब्धमिदञ्च लभ्यमधिकं तन्मूललभ्यं ततो
लभ्यञ्चापरमित्यनारतमहो लभ्यं धनं ध्यायसि ।
नैतद्वेत्सि पुनर्भवन्तमचिरादाशा पिशाची बलात्
सर्व्वग्रासमियं ग्रसिष्यति महामोहान्धकारावृतम् ॥

अपि च । धनं तावल्लब्धं कथमपि तथाप्यस्य विलयो
विनाशे नाशे वा तव सति वियोगोऽप्युभयथा ।
अनुत्पादः श्रेयान् किमु कथय पथ्योऽथ विलयो
विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥

किञ्च । मृत्युर्माद्यति मूर्द्ध्नि शश्वदुरगी घोरा जरारूपिणी

---

न दीर्णं तन्नियतमशनिपाषाणमयघटितम् । अशनिर्वज्रं ग्रावा शिला ।
एतल्लब्धमिति । इदमपि लुब्धं पुरुषं सम्बोध्यैवेति । अहो त्वं अनारतं
लब्धं लप्स्यमानं लब्धुमाकाङ्क्षितमपर्य्याप्तं धनमेव ध्यायसि । अलभ्यं धन-
मिति नार्थं श्रीदनादर्शोपलब्धात् परं लभ्यभावात् । ध्यानाकारमाह । एतदिति
एतल्लब्धमिदमधिकं लभ्यमिति अतस्तन्मूलेन लभ्यं लब्धुमुचितं परं लभ्यं
लप्स्यत इत्यर्थः । इति ध्यायसीत्यर्थः । एतत् पुनर्न वेत्सि आशा पिशाचीयं
महामोहान्धकारावृतं भवन्तं बलादचिरात् सर्व्वग्रासं सर्व्वावयवग्रासेनैव
ग्रसिष्यति न तु किञ्चिदवयवग्रासेनेत्यर्थः । धनं तावदिति । कथमपि
प्रकारेण धनं तावद् यदि लब्धं तथाप्यस्य धनस्य विलयो नाशस्तथा च
धनस्य विनाशे ध्वंसे नाशेऽनुत्पादे वा सति धनेन सह तवोभयथा वियोगः ।
नाशपदमत्रानुत्पादपरम् । यद्वा । तव नाशे वा सतीत्यर्थः । वियोगोऽपी-
त्यपिशब्दस्य तथापीत्येवमन्वयः । उभयोस्त्वं कथय किं धनस्यानुत्पादः श्रेयान्
अथवा विलयो विनाशः पथ्यः । अथेत्यत्र वाकारः पूरणीयः । कोटिद्व-
यस्य भद्राभद्रत्वं स्वयमेव दर्शयति विनाश इति लब्धस्य धनस्य विनाशो
व्यथयतितरां न त्वनुदयो व्यथयतितरामित्यर्थः । मृत्युरिति । इयमपि

त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते ।
धौत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः
सन्तोषामृतसागराम्भसि सुखं मग्नश्चिरं स्थास्यसि ॥

प्रती । अज्ज ! एसो सामी ता उवसप्पदु महाभाओ ।

सन्तो । [ तथा कृत्वा ] जयति जयति स्वामी एष सन्तोषः प्रणमति ।

राजा । इहोपविश्यताम् [ इति स्वसन्निधावुपवेशयति ]

सन्तो । [ उपविश्य] स्वामिन् ! एष प्रैष्यजन, स्तदाज्ञयाऽनुगृह्यताम् ।

राजा । विदितप्रभाव एव भवांस्तदलमत्र विलम्बेन लोभं जेतुं वाराणसीं प्रतिष्ठताम् ।

सन्तो । यदाज्ञापयति देवः सोऽहमिदानीम्—

नानामुखं विजयिनं जगतां त्रयाणां

---

संसारदुःखलुब्धजनं प्रत्युक्तिः । यद्यतृ वारं वारं मूर्द्धि मृत्युर्नोद्यति मदेन नृत्यतीत्यर्थस्तथा च तव मरणमासन्नलोभेन किं किं करिष्यसीत्यर्थः । मरणसामग्रीं दर्शयति । उरगीति जराहृपिणी घोरैषा उरगी त्वां ग्रसते तथा संसारपरिग्रहमयैर्गृध्रैर्जगदेव ग्रसते । संसारपरिग्रहस्य लोभमूलकत्वेनेदमपि लुब्धानामनिष्टप्रदर्शनम् । तर्हि मया किं कर्त्तव्यमित्याह । धौत्वेति । तत् तस्मात् संसारवासनारूपं लोभजन्यं रजो धूलिमबोधादज्ञानाद्बहुलमनेकं बोधरूपैर्जलैर्धौत्वा प्रक्षाल्य सन्तोषरूपेऽमृतसागरजले भृशं मग्नश्चिरं स्थास्यसि चिरं जीवी भविष्यसीत्यर्थः । यद्वा, सन्तोषत्वादौ चिरं मग्नः स्थास्यसि न तु धनवियोगदुःखमनुभविष्यसीत्यर्थः । अज्ज! इति । आर्य ! एष स्वामी तदुपसर्पतु महाभागः। इति सं। नानामुखमिति ।

देवद्विजातिबधबन्धन लब्धवृत्तिम् ।
रक्षोऽधिनाथमिव दाशरथिः प्रसह्य
निर्जित्य लोभमवशं तरसा छिनद्मि ।

[ इति प्रक्रम्य निष्क्रान्तः ]

[ प्रविश्य विनीतपुरुषः ] देव ! सम्भृतानि विजयप्रयाणमङ्गलानि प्रत्यासन्नश्च मौहूर्त्तिको विदितप्रयाणसमयः ।

राजा । यद्येवं सेनाप्रस्थापनायादिश्यन्तां सेनापतयः ।

पुरु । यथाज्ञापयति देवः [इति निष्क्रान्तः]

[नेपथ्ये ] भो ! भोः !

सज्जयन्तां कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा
योज्यन्तां स्यन्दनेषु प्रसभजितमरुच्चण्डवेगास्तुरङ्गाः ।
कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तः
पादाताः सञ्चरन्तु प्रथममसिलतापाणयोऽथाश्ववाहाः ॥

---

इदानीं सोऽहं प्रसह्य बलात्कारेण लोकं अवशं स्वायत्तं निर्जित्य तरसा वेगेन छिनद्मि नाशयामीत्यर्थः । रक्षोधिनाथं रावणं दाशरथी राम इव । लोभरावणयोर्द्वयोरपि विशेषणान्याह नानासुखमिति नानाविषयेषु सुखं साम्मुख्यं प्रवृत्तिर्यस्य तादृशं लोभं रावणन्तु दशमुखम् । त्रयाणां जगतां विजयिनं लोभस्य जगत्त्रयाक्रमात् रावणस्य च जगत्त्रयपराभवकरणात् । देवेति लब्धवृत्तिं लब्धव्यवसायं लोभस्य देवादीनां हिंसया स्वाभीष्टोत्पादनात् रावणस्य तु स्वप्रसिद्धमेव तत् । मौहूर्त्तिको मुहूर्त्तनिर्णयकर्त्ता गणकः ।सज्जयन्तामिति । कुम्भरूपभित्तिच्युतताया मदमदिराया आमोदेन मत्ता भृङ्गा येभ्य स्तादृशाः करीन्द्राः सज्जयन्तां सज्जाः क्रियन्ताम् । प्रसभेन बलात्कारेण जितो मरुद्वायुस्तादृशाश्चण्डवेगास्तुरङ्गाः स्यन्दनेषु योज्यन्ताम् । ककुभां दिशामन्तराले मध्ये नीलोत्पलानां वनमिव कुन्तैरस्त्रविशेषैः सृजन्तः पादाताः प्रथमं सञ्चरन्तु । अथानन्तरमसिलतापाणयोऽश्ववाहाः सञ्चरन्त्वित्यर्थः ।

राजा । भवत्विदानीं कृतमङ्गलाः प्रतिष्ठामहे [ पारिपार्श्विकं प्रति ] भोः ! सारथिरादिश्यतामुपनयतु मे सज्जीकृत्य सांग्रामिकं रथम् ।

पारि । यथाज्ञापयति [ इति निष्क्रान्तः ]

[ततः प्रविशति यथोक्तं रथमादाय सारथिः] ।

सारथिः । देव ! एष सज्जीकृतो रथस्तदारोहत्वायुष्मान्

राजा । [ कृतमङ्गलविधीरथाधिरोहणं नाटयति ]

सारथिः । [ रथवेगं निरूप्य ] आयुष्मन् ! पश्य पश्य ।

उद्धूतपांशुपटलानुमितप्रबन्ध-
धावत्खुराग्रचयचुम्बितभूमिभागाः ।
निर्मथ्यमानजलधिध्वनिघोरघोष-
मेते रथं गगनसीम्नि वहन्ति वाहाः ॥

इयञ्च नातिदूरे दर्शनपथमवतीर्णा त्रिभुवनपावनी पुनाति वाराणसी नगरी तथा ह्यस्याम् ।

अमी धारायन्त्रस्खलितजलझात्कारमुखरा
विभाव्यन्ते भूयः शशिकररुचः सौधशिखराः ।

---

पारिपार्श्विकं स्वानुचरम् । उद्धूतेन पांशुपटलेनानुमितः प्रबन्धो गतिपरिपाटी येषां तादृशाः ये धावन्तः खुरास्तेषामग्रचयेन चुम्बितः स्पृष्टो भूमिभागो यैस्तादृशा एते वाहा अश्वा निर्मथ्यमानस्य जलधेर्ध्वनिवद्घोरघोषं यथा स्यात्तथा गगनसीम्नि रथं वहन्तीत्यर्थः । पुनातीति मामिति शेषः । अमी धारेति । अमी शशिकररुचः सौधशिखरा भूयो वारं वारं यथा स्यात्तथा विभाव्यन्ते दृश्यन्ते कीदृशा धारायन्त्रं जलसञ्चारणाय कृतयन्त्रं प्रक्रियाविशेषस्तेन स्खलितानां जलानां झात्कारेण झादित्यव्यक्तशब्देन मुखराः । यत्र येषु पताकाव-

विचित्रां यत्रोच्चैः शरदमलमेघान्तविलसत्-
तडिल्लेखालक्ष्मीं वितरति पताकावलिरियम् ॥

[परिक्रम्य] एताश्च प्रतिमुकुललग्नमधुपावलीरणितमुखरा जृम्भा-भरविगलन्मकरन्दविन्दुदुर्दिनाः कुसुमसुरभयो नातिदूरे श्यामा-यमानघनच्छदच्छायातरला नगरपर्य्यन्तारण्यभूमयो यत्नेते मा-रुताश्रपि गृहीतपाशुपतव्रतास्तापसा इव लक्ष्यन्ते तथा हि—

तोयार्द्राः सुरसरितः सिताः परागै-
रच्चन्त्यग्रतकुसुमैरिवेन्दुमौलिम् ।
प्रोद्गीतां मधुपरुतैः स्तुतिं पठन्तो
नृत्यन्ति प्रचललताभुजैः समीराः ॥

राजा । [सानन्दमवलोक्य] सूत ! पश्य पश्य ।

एषान्तर्दधती तमोविघटनादानन्दमात्मप्रभं
चेतः कर्षति चन्द्रचूड़वसतिर्विद्येव मुक्तेः पदम् ।

---

लिरियं शरदमलमेघस्यान्ते विलसन्त्यास्तडिल्लेखाया विचित्रां लक्ष्मीमुच्चैर्वितरति पश्यतां चक्षुःसुखं ददातीत्यर्थः । एताश्चेति नगरपर्य्यन्तारण्यभूमयो दृश्यन्त इति शेषः । कीदृश्यः प्रतिमुकुललग्नाया मधुपावल्या रणितेन शब्देन मुखराः । जृम्भाभरेण विकाशातिशयेन विगलतां मकरन्दविन्दूनां दुर्दिनं यत्र तादृश्यः । श्यामायमानानां घनच्छदानां निविड़पत्राणां छायया तरलास्छायाचलनादेव तत्तारल्यं बोध्यम् । छायातरव इति पाठान्तरं तदा च छायातरुः स्थिरच्छाय इति कोशादर्थो बोध्यः । तोयार्द्रा इति । समीराः प्रचललतारूपैर्भुजैर्नृत्यन्ति कीदृशाः सुरसरितो गङ्गायास्तोयैरार्द्राः परागैश्च कुसुमरेणुभिः सिताश्च अग्रतैः कुसुमैरिन्दुमौलिमर्च्चन्त इव प्रोद्गीतां प्रकर्षोच्चरितां स्तुतिं मधुपरुतैः पठन्तो नृत्यन्तीतिपाठनृत्ययोरुभयत्रैवार्थो बोध्यः । पाशुपत-व्रतधरोऽपि गङ्गास्नातो भस्मपरागसितः कुसुमैः शिवमर्च्चयन् स्तुतिं पठन् नृत्यति । एषान्तर्द्दधतीति । एषा चन्द्रचूड़स्य महेशस्य वसतिर्वाराणसी चेतः कर्षति

भूमेः कण्ठविलम्बिनीव कुटिला मुक्तावली जाह्नवी
यत्रेयं हसतीव फेनपटलैर्वक्रां कलामैन्दवीम् ॥

सूतः। [परिक्रम्य] आयुष्मन्! पश्य पश्य इदञ्च तत्सुरसरित्परिसरालङ्कारभूतं भगवतः पावनमादिकेशवाभिधानस्य विष्णोरायतनम्।

राजा। [विलोक्य सहर्षम्] अये!

एष देवः पुराविद्भिः चेत्रस्यात्मेति गीयते।
अत्र देहं परित्यज्य पुण्यभाजो विशन्ति यम् ॥

सूतः। आयुष्मन्! पश्य पश्य एते कामक्रोधलोभादयोऽस्मद्दर्शनादेव दूरमपक्रामन्ति।

राजा। एवमेवैतत् भवतु प्रविश्य भगवन्तं देवमादिकेशवं नमस्यामः [रथादवतीर्य्य प्रविश्यावलोक्य च] जय जय भगवन्नमरचयचमूचक्रचूड़ामणिश्रेणीराजितोपान्तपादद्वयाम्भो-

---

विद्येव मुक्तेः पदं कीदृशी तमोविघटनादस्मानन्नाशादन्तर्मनस्यानन्दं दधत्यर्पयन्ती आनन्दं कीदृशम् आत्मप्रभं ब्रह्मतुल्यं आनन्दो ब्रह्मणो रूपमिति श्रुत्या ब्रह्मणोऽप्यानन्दकत्वबोधनात् तथा च परमानन्दतुल्यमानन्दमित्यर्थः। आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इति कोषः। यत्र वाराणस्यामियं जाह्नवी फेनपटलैर्महेशमूर्द्धि स्वसमशीलामैन्दवीं वक्रां कलां हसतीव स्वयमपि महेशमूर्द्धस्था कुटिला फेनधवला च कीदृशी भूमेः कण्ठविलम्बिनी मुक्तावलीवेति दैर्घ्यकौटिल्यधावल्यैः सादृश्यम्। एष देव इति। एष आदिकेशवः चेत्रस्य वाराणसीरूपस्यात्मेति पुराविद्भिर्गीयते अत्र चेत्रे देहं परित्यज्य यमादिकेशवं पुण्यभाजो विशन्ति। जय जयेति। हे भगवन्! जय जय भक्तजनस्य संसारच्छिदं बोधोदयं देहि तस्मात्तुभ्यं नम इत्यन्वयः। तत्रामरचयेत्यादि द्युते इत्यन्तं सम्बोधनमेकं हे अमरचयस्य यच्चमू

जराजन्नखद्योतखद्योतकिर्म्मीरितस्वर्णपीठद्युते ! स्फुरद्द्वैतवि-
भ्रान्तिसन्तानसन्तप्तवन्दारुसंसारनिद्रापहारैकदक्ष क्षमामण्ड-
लोद्धारसम्भारसंखिन्नदंष्ट्राग्रकोटिस्फुरच्छैलचक्र ! क्रमाक्रान्त-
लोकत्रय ! प्रबलभुजबलोद्धूतगोवर्द्धनच्छत्रनिर्वारिताखण्डलोद्यो-
तिताकाण्डचण्डाम्बुवाहातिवर्षाम्बुसान्द्रत्वसङ्गोकुलत्राणविस्मायि-
ताशेषविश्वप्रभो ! विबुधरिपुबधूवर्गसीमन्तसिन्दूरसन्ध्यामयूख-
च्छटोन्मार्जितोद्दामधामाधिप ! त्रस्तदैत्येन्द्रवक्षस्तटकपाटपाट-
नाकुण्ठभास्वन्नखश्रेणिपाणिद्वयन्यस्तविस्तीर्णरत्नार्णवामग्नलोक-

---

चक्रं सैन्यसमूहस्तच्चूड़ामणिश्रेण्या नीराजितं यत्पादद्वयाम्भोजं तत्र राजतां
नखानां द्योता एव खद्योतास्तैः किर्म्मीरिता मिश्रिता स्वर्णपीठस्य द्युतिर्यस्य
तादृश । स्फुरदित्यादि दक्षेत्यन्तमपरं सम्बोधनं हे स्फुरता द्वैतविभ्रान्ति-
सन्तानेन द्वैतभ्रमसमूहेन सन्तप्तस्य वन्दारुसंसारस्य प्रणमज्जगतो भ्रमरूप-
निद्रापहारे एकदक्ष प्रधानसमर्थ । क्षमेत्यादि चक्रान्तमपरं हे क्षमा-
मण्डलस्य भूमण्डलस्य उद्धारसम्भारे उत्तोलनारम्भे वराहमूर्त्तेः संखिन्नायाः
प्रापितखेदाया दंष्ट्राया अग्रकोटेरग्रभागस्याग्रं तत्र स्फुरद्विदीर्णं शैलचक्रं
यस्मात् तादृश । तथा हे क्रमाक्रान्तलोकत्रय ! क्रमस्त्रिविक्रमस्य पाद-
न्यवेशाक्रमस्तेनाक्रान्तं व्याप्तं लोकत्रयं येन तादृश । प्रबलेत्यादि विश्वेत्यन्त-
मपरं हे प्रभो ! प्रबलभुजबलादुद्धूतेनोत्तोलितेन गोवर्द्धनपर्व्वतरूपच्छत्रेण
निर्व्वारितमाखण्डलेन इन्द्रेण उद्द्योतितस्य प्रवर्त्तितस्याकाण्डचण्डाम्बुवा-
हस्याकस्मिकचण्डमेघस्यातिवर्षाधीनं यदम्बु तेन सान्द्रत्वसतां मतिविभ्रमतां
गोकुलानां त्राणेन विस्मापितं विस्मितीकृतमशेषविश्वं येन तादृश । विबुधे-
त्यादि धामाधिपेत्यन्तमपरं हे विबुधरिपुबधूवर्गस्य सीमन्ते या सिन्दूररूपा
सन्ध्या अर्थाद्वैधव्यात् सीमन्ततोऽपसार्य्यमाणा तस्या या मयूखच्छटा तया
उन्मार्ज्जित उज्ज्वलीकृतो धामाधिपः सूर्य्यो येन तादृश । त्रस्तेत्यादि लोक-
त्रयेत्यन्तमपरं हे त्रस्तो नरसिंहमूर्त्तिदर्शनाद्भीतो यो दैत्येन्द्रो हिरण्यकशिपुस्तस्य
वक्षोरूपतटात्मककपाटस्य पाटने विदारणे अकुण्ठा भास्वती दीप्तिमती
नखश्रेणी यस्य तादृशेन पाणिद्वयेन न्यस्ते विस्तीर्णे रत्नरूपार्णवे आमग्नं

जय ! त्रिभुवनरिपुकैटभाकुण्ठकण्ठास्थिकूटस्फुटोन्मार्जितोद्दामचक्रस्फुरज्ज्योतिरुल्काशतोड्डामरोद्दण्डदोर्दण्ड ! खण्डेन्दुचूड़प्रिय ! प्रौढदोर्दर्पविभ्रान्तमन्थाचलक्षुब्धदुग्धाम्बुधिप्रोत्थितश्रीभुजावल्लीसंश्लेषसंक्रान्तपीनस्तनाभोगपत्रावलीलाञ्छितोरःस्थलस्थूलमुक्ताफलोदारहारप्रभामण्डलस्फुरत्कण्ठ ! वैकुण्ठ ! भक्तस्य लोकस्य संसारच्छिदं देहि बोधोदयं देव ! तुभ्यं नमः [ निर्गमं नाटयित्वा विलोक्य ] साधुरयमस्माकं निवासयोग्यो देशस्तदत्रैव स्कन्धावारं निवेशयामः [ इति निष्क्रान्तौ ]

इति विवेकोद्योगो नाम चतुर्थोऽङ्कः

---

लोकत्रयं यस्मात् तादृशनखैर्हिरण्यकशिपोर्वक्षोविदार्य्य पातिद्वयेन शिलीभूतैस्त्वदीयरक्तैर्जगद्व्यापनात् । त्रिभुवनेत्यादि दोर्दण्डेत्यन्तमपरं हे त्रिभुवनरिपोः कैटभस्याकुण्ठो यः कण्ठास्थिकूटस्तत्र स्फुटमुन्मार्जितस्य तत्कर्त्तनेन निर्म्मलीभूतधारस्य चक्रस्य स्फुरन्ती ज्योतिरुल्काशतेन उड्डामरउद्दण्डउद्भटो दोर्दण्डो यस्य तादृश । हे खण्डेन्दुचूड़स्य महेशस्य प्रिय ! प्रौढेत्यादि स्फुरत्कण्ठेत्यन्तमपरं सम्बोधनं हे प्रौढदोर्दर्पेण विभ्रान्तो यो मन्थाचलो मन्दराद्रिस्तेन क्षुब्धात् दुग्धाम्बुधेरुत्थितायाः श्रियः स्वभुजावल्लिसंश्लेषेण स्वोरसि संक्रान्ता या पीनस्तनाभोगस्य पत्रावली तया लाञ्छिते उरःस्थले यः स्थूलो मुक्ताफलघटितउदारहारस्तत् प्रभामण्डलेन स्फुरन्दीप्यमानः कण्ठो यस्य तादृश । हे वैकुण्ठेत्यपरं सम्बोधनं । स्कन्धावारं सेनां

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां प्रबोधचन्द्रोदयटीकायां चतुर्थाङ्कविवरणम् ॥

---

## पञ्चमोऽङ्कः ।

अतः परं वैराग्योत्पत्तिर्भविष्यति

[ ततः प्रविशति श्रद्धा ] ।

श्रद्धा । [विचिन्त्य] प्रसिद्धः खल्वयं पन्था यतः—

निर्दहति कुलमशेषं ज्ञातीनां वैरसम्भवः क्रोधः ।
वनमिव घनपवनाहततरुवरसंघट्टसम्भवो दहनः ॥

[ सास्रम् ] अहो ! दुर्वारदारुणः सोदरव्यसनजन्मा शोकानलो यो विवेकजलधरशतैरपि न मन्दीक्रियते तथा हि—

ध्रुवं ध्वंसी भावी जलनिधिमहीशैलसरिता-
महोरात्रं शीर्य्यत्तृणलघुषु का जन्तुषु कथा ।

---

वैराग्योत्पत्तिरिति विवेकसैन्येन कामक्रोधादौ महामोहसैन्ये नाशिते स्वपौत्रादिशोकाकुलस्य मनसोऽयासिक्या सरस्वत्या वैराग्यस्योत्पादयिष्य-माणत्वात् । निर्दहतीति । वैरसम्भवः क्रोधो ज्ञातीनामशेषं कुलं निर्दहति घनपवनेनाहतयोस्तरुवरयोः संघट्टेन सम्भवो यस्य तादृशो दहनो वनमिव । विवेकजलधरेति विवेकोऽत्र शोकस्य कर्त्तव्याकर्त्तव्यत्वविचारः । ध्रुवमिति । जलनिध्यादीनामपि ध्वंसो ध्रुवं भावी अहोरात्रं प्रतिक्षणं शीर्य्यत्तृणलघुषु

तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषमो
विवेकप्रोन्माथी दहति हृदयं शोकदहनः ॥

येन तथाप्रक्रान्तेष्वपि भ्रातृषु कामक्रोधादिषु तथाशेषतां गतेषु ।

निकृन्ततीव मर्म्माणि देहं शोषयतीव मे ।
दहतीवान्तरात्मानं क्रूरः शोकाग्निरुच्छिखः ।

[ विचिन्त्य ] आदिष्टास्मि देव्या विष्णुभक्त्या यथा वत्से श्रद्धे ! अहमत्र हिंसाप्रायसमरदर्शनविमुखी तेन वाराणसीमुत्सृज्य शालग्रामाभिधाने भागवते क्षेत्रे कञ्चित् कालमतिपातयितु-मिच्छामि त्वन्तु यथावृत्तं समरवृत्तान्तं मे निवेदयिष्यसीति तदहमिदानीं देव्याः सकाशं गत्वा समरवृत्तान्तं निवेदयामि [ परिक्रम्य विलोक्य च ] एतच्चक्रतीर्थं यत्रायं भगवान् संसार-सागरतरणिकर्णधारो हरिः प्रतिवसति [ प्रणम्य ] इयञ्च सा मुनिभिरुपास्यमाना भगवती विष्णुभक्तिः शान्त्या सह किमपि मन्त्रयन्ती तिष्ठति तद्यावदुपसर्पामि ।

[ ततः प्रविशति विष्णुभक्तिः शान्तिश्च ]

शान्तिः । कथं देव ! प्रचुरचिन्ताकुलितामिव भवती-मालोकयामि ।

---

जन्तुषु का कथा तेषां ध्वंसः सुतरामेवेत्यर्थः । तथापि कोऽपि विषमो बन्धुव्यसनजनितः शोकदहन उच्चैर्हृदयं दहति कीदृशो विवेकप्रोन्माथी तथा प्रक्रान्तेष्विति दुर्वृत्तेष्वित्यर्थः । निकृन्ततीति क्रूर उच्छिख उद्गत शिखः शोकाग्निर्मर्म्माणि निकृन्ततीव छिनत्तीव अन्यत् स्पष्टम् । वत्से इत्यादि विष्णुभक्त्यादेशानुवादः । तदहमित्यादिकन्तु श्रद्धायाः परामर्शः ।

विष्णु। वत्से! एतस्मिन्महति वीरक्षये संग्रामे न जाने बलवता महामोहेनाभियुक्तस्य वत्सविवेकस्य कीदृशो वृत्तान्त इति दुःखितमिवमे हृदयम्।

शान्तिः। किमत्र चिन्त्यं ननु भवती चेत् कृतानुग्रहा तदा नियतमेव राज्ञो विवेकस्य विजय इति जानामि।

विष्णु। वत्से!

यद्यप्यभ्युदयप्रायः प्रमाणादवधार्य्यते।
कामं तथापि सुहृदामनिष्टाशंसि मानसम्॥

विशेषतश्च श्रद्धायाश्चिरमनागमनं मनसि सन्देहमारोहयति।

श्रद्धा। [सहसोपसृत्य] देवि! प्रणमामि।

विष्णु। श्रद्धे! स्वागतासि।

श्रद्धा। देव्याः प्रसादेन।

शान्तिः। अम्ब! प्रणमामि।

श्रद्धा। पुत्रि! परिष्वजस्व माम्।

शान्तिः। [तथा करोति]

विष्णु। श्रद्धे! कथय तत्र किं वृत्तम्।

श्रद्धा। यद्देव्याः प्रतिकूलमाचरतामुचितम्।

विष्णु। तद्विस्तरेणावेदय।

श्रद्धा। आकर्णयतु भगवती देव्यामादिकेशवायतनात् प्रतिनिवृत्तायामेव किञ्चिदुत्सृष्टपाटलधाम्नि भगवति भास्वति विजयघोषणाहूयमानानेकवीरबहुल सिंहनादवधिरीकृतदिग-

देव्यामादिकेशवायतनादित्यादि। भगवति भास्वति सूर्य्ये किञ्चिदुत्सृष्टपाटल धाम्नि सति प्रातःकाल इत्यर्थः। तेषां महामोहादीनामस्माकञ्च सैन्यसागरे सम्बद्धे मिलिते सति महाराजविवेकेन नैयायिकं दर्शनं दौत्येन प्रहितमित्यन्वयः। सैन्यसागरे कीदृशे विजयघोषणया आहूयमानानाम-

स्मरे सन्ततरथतुरगखुरखण्डितभूमण्डलोच्चलद्विपुलरजःपटलपटान्तरितकिरणमालिनि प्रबलतरकर्णतालास्फालनोच्चलत् समदकरिकुम्भसिन्दूरसन्ध्यायमानदशदिशि प्रलयजलधरध्वानभीषणे तेषामस्माकञ्च सम्बन्धे सैन्यसागरे महाराजविवेकेन नैयायिकं दर्शनं दौत्येन प्रहितम्। गत्वा च तेनोक्तो महामोहः ।

विष्णोरायतनान्यपास्य सरितां कूलान्यरण्यस्थलीः
पुण्याः पुण्यभृतां मनांसि च भवान् म्लेच्छान् व्रजेत् सानुगः ।
नो चेत् सन्तु कृपाणदारितभवत्प्रत्यङ्गधाराचर
द्रक्तस्फीतविदीर्णवक्त्रविलसत्फेत्कारिणः फेरवः ॥

विष्णु । ततस्ततः ।

श्रद्धा । ततो देवि ! विकटललाटतटताण्डवितभ्रुकुटिना महामोहेनाभिहितं अनुभवत्वस्य दुर्णयपरिपाकस्य विवेकहतक फलमित्यभिधाय स्वयं पाषण्डागमाः पाषण्डतरैः समं

---

नेकशोराणां बहुलैः सिंहनादैर्वधिरीकृतं दिगन्तरं यत्र तादृशे । सन्ततेन रथतुरगाणां खुरैः खण्डिताद्भूमण्डलादुच्चलता उद्गच्छता विपुलरजःपटलरूपपटेनान्तरित आच्छादितः किरणमाली सूर्य्यो यत्र तादृशे । प्रबलतरस्य कर्णरूप तालस्य करतालस्यास्फालनेन उच्चलता उद्गच्छता समदकरिकुम्भसिन्दूरेण सन्ध्यायमानाः सन्ध्यातुल्या दशदिशो यत्र तादृशे । तथा प्रलयकालीनजलधरस्येव ध्वानैः शब्दैर्भीषणे विष्णोरायतनानीति । भवान् महामोहः सानुगोऽनुगामिभिर्मदमानादिभिः सह म्लेच्छान् व्रजेत् किं कृत्वा विष्णोरायतनानि गृहाणि सरितां नदीनां कूलानि पुण्यारण्यस्थलीः पुण्यकृतां मनांसि चापास्य त्यक्त्वेत्यर्थः । म्लेच्छान् नगच्छसि चेत् तदा कृपाणदारितभवत्प्रत्यङ्गात् धाराचरता रक्तेन स्फीताश्च ते विदीर्णवक्त्रे विलसत्फेत्कारश्चेति कर्म्मधारयः फेरवः शृगालास्तादृशाः सन्त्वित्यर्थः ।

प्रथमं समवायोद्योजिताः। अत्रान्तरे चास्माकमपि सैन्यशिरसि।

सा वेदवेदाङ्गपुराण धर्म्मशास्त्रेतिहासादिभिरच्छितश्रीः।
सरस्वती पद्मकरा शशाङ्कसङ्काशकान्तिः सहसाविरासीत्॥

विष्णु। ततस्ततः।

श्रद्धा। ततोवैष्णवशैवादयो देव्यां सकाशमागताः सर्व्वं एवागमाः।

विष्णु। ततस्ततः।

श्रद्धा। अनन्तरम्।

सांख्यन्यायकणादभाषित महाभाष्यादिशास्त्रैर्वृता
स्फूर्जन्न्यायसहस्रबाहुनिवहैरुद्योतयन्ती दिशः।
मीमांसा समरोत्सुकाविरभवद्धर्म्मेन्दु कान्ताननो
वाग्देव्याः पुरतस्त्रयी त्रिनयना कात्यायनी वा परा॥

शान्तिः। [ साश्चर्य्यम् ] अये! कथं स्वभावप्रतिद्वन्द्विनामप्यागमनां समवायः सम्पन्नः।

श्रद्धा। पुत्रि!

---

सा वेदेति। ततोऽस्माकं सैन्यशिरसि सा प्रसिद्धा सरस्वती सहसा आविरासीत् कीदृशी वेदवेदाङ्गादिभिरच्छिता श्रीः कान्तिर्यस्यास्तादृशी तथा पद्महस्ता शशाङ्कतुल्यकान्तिः। देव्या इति सरस्वत्या इत्यर्थः।
सांख्येति। अनन्तरं वाग्देव्याः पुरतः समरोत्सुका मीमांसा आविरासीत् कीदृशी सांख्यशास्त्रेण न्यायशास्त्रेण कणादभाषितमहाभाष्यादिशास्त्रैश्च वृता स्फूर्जद्भिर्न्यायसहस्ररूपैस्तर्करूपैर्बाहुनिवहैर्दिश उद्योतयन्ती धर्म्मात्मकेन्दुरिव कान्तमाननं यस्यास्तादृशी त्रयीरूपाणि त्रीणि

समानान्वयजातानां परस्परविरोधिनाम् ।
परैः प्रत्यभियुक्तानां प्रसूते संहतिः श्रियम् ॥

तेन वेद प्रसूतानां तेषामवान्तरविरोधेऽपि वेदसंरक्षणाय नास्तिकपक्षप्रतिक्षेपार्थश्च शास्त्राणां साहित्यमस्त्येव आगमानान्तु तत्त्वं विचारयतामविरोध एव तथा हि—

ज्योतिः शान्तमनन्तमव्ययमजं तत्तद्गुणोन्मेषणा-
द्ब्रह्मेत्यच्युत इत्युमापतिरिति प्रस्तूयतेऽनेकधा ।
तैस्तैस्तेन सदागमैः श्रुतिमुखैर्नानापथप्रस्थितै-
र्गम्योऽसौ जगदीश्वरो जलनिधिर्वारां प्रवाहैरिव ॥

विष्णु । ततः ।

---

नेत्राणि यस्यास्तादृशी च अपरा कात्यायनी वा त्रिनयनत्वात् । समानान्वयेति । परैर्भिन्नकुलैः प्रत्यभियुक्तानां समानान्वयजातानां परस्परविरोधिनामपि संहतिर्मेलनं श्रियं प्रसूत इत्यर्थः । परस्परविरोधिनां शास्त्राणां समानान्वयजातत्वं दर्शयति तेन वेदेति । सांख्यादिशास्त्राणां वेदार्थव्याख्यान एव परस्परविरोधो न तु वेदप्रामाण्याभ्युपगमे । अवेदप्रामाण्याभ्युपगन्तृनास्तिकपक्षप्रतिक्षेपाय वेदप्रामाण्यसाधनाय च सांख्यादिशास्त्राणां साहित्यमस्त्येवेत्यर्थः । तत्तच्छास्त्रमूलीभूतागमानान्तु तत्त्वप्रतिपादानांशेऽविरोध एवेत्याह आगमानान्त्विति । विचारयतां निर्णाययताम् । तत्त्वनिर्णायनेऽविरोधं दर्शयति तथा हि ज्योतिरिति । तैस्तैरागमैः शान्तं निर्विकारम् अनन्तम् अपरिच्छेद्यम् अव्ययम् अनश्वरम् अजम् अनुत्पन्नं ज्योतिस्तत्तद्गुणानां सत्त्वरजस्तमसामन्यतमस्य उन्मेषणादाधिक्यात् ब्रह्मेत्यादितयाऽनेकं प्रस्तूयते प्रतिपाद्यते रजोगुणाधिक्याद्ब्रह्मैव तत् तमोगुणाधिक्यादुमापतिरेव तत् सत्त्वगुणाधिक्यादच्युत एव तदिति प्रतिपाद्यत इत्यर्थः । तेन हेतुना तैस्तैरागमैर्ब्रह्म प्रतिपादकागमैः श्रुतिमुखैस्तत्तच्छ्रुतिमूलकैर्नानापथे नानाविधार्थव्याख्याने प्रस्थितैरेकोऽसौ जगदीश्वरो गम्यो वारां प्रवाहैर्जल-

श्रद्धा। तदनन्तरं देवि! परस्परं करितुरगरथपादा-
तानां निरन्तरशरनिकरधारासहस्रपातोपदर्शितदुर्दिनानाञ्च
योधानां तुमुलः संप्रहारः प्रवृत्तस्तथा हि—

वहलरुधिरतोयास्तत्र सस्रुः स्रवन्त्यो-
निविड़पिशितपङ्काः कङ्कवङ्कावकीर्णाः।
शरदलितविशीर्णोत्तुङ्गमातङ्गशैल-
स्खलितरयविशीर्थ्यच्छत्रहंसावतंसाः॥

तस्मिंश्चातिदारुणे संग्रामे परस्परविरोधितया पाषण्डागमैर-
ग्रेसरीकृतं लोकायतं नाम शास्त्रं तच्चान्योन्यविमर्द्दनैरेव
विनष्टम् अनन्तरञ्च पाषण्डागमद्रुमा निर्मूलतया सदागमा-
र्णवप्रवाहपर्य्यस्ताः सौगतास्तावत् सिन्धुगान्धारपारसीकमगधा-
ङ्गकलिङ्गादीन् देशान् प्रविष्टाः पाषण्डदिगम्बरकापालिका-

---

निधिरिवेत्यर्थः। परस्परमित्यादि। परस्परं सम्प्रहारः प्रवृत्त इत्यन्वयः। निरन्तरेति। निरन्तरेण निश्छिद्रेण शरनिकरधारासहस्रस्य पातेनोपदर्शितं दुर्दिनं दृष्टिर्यैस्तादृशानां योधानां धानुष्काणां करितुरगादीनाञ्चेत्यर्थः। बहलेति। तत्र संग्रामे बहलरुधिरं निविड़रुधिरमेव तोयं यासां तादृश्यः स्रवन्त्यो नद्यः सस्रुः प्रवृत्तिरे कोदृश्यो निविड़ानि पिशितान्येव पङ्का यासां तादृश्यस्तथा कङ्का एव क्षुधार्त्तत्वेन वङ्का दरिद्रास्तैरवकीर्णाः। नद्यां मत्स्यभक्षणार्थं रुधिरेषु च तद्भक्षणार्थं क्षुधार्त्तकङ्कस्थितिः। तथा शरदलिता वाणच्छिन्ना अत एव विशीर्णा मृता ये उत्तुङ्गमातङ्गास्त एव शैलास्तत्र स्खलितो यो रयो वेगस्तेन विशीर्य्यन्ति भज्यमानानि छत्राण्येव हंसास्त एव कर्णभूषा यासां तादृश्यः। रयस्खलनाधीनाभिघातच्छत्रभङ्गः। तस्मिंश्चेति। यल्लोकायतं शास्त्रमग्रेसरीकृतं परस्परविमर्द्दनैरेव तद्विनष्टमित्यन्वयः। लोकायतशास्त्रस्य च परस्परविरोधिपाषण्डागमानां मूलभूतत्वादग्रेसरीकरणम्। पर्य्यस्ता अपसारिताः। तेषामागमानामिति सौगता-

दयश्च पामरबहुलेषु पाञ्चालमालवाभीरेषूपेत्य निगूढं प्रचरन्ति न्यायानुगतया च मीमांसया गाढप्रहारजर्ज्जरीकृता नास्तिकतर्कास्तेषामेवागमानामनुपदं प्रयाताः।

विष्णु। ततस्ततः।

श्रद्धा। ततो वस्तुविचारेण कामो हतः क्षमया तु क्रोधपारुष्यहिंसादयो निराकृताः सन्तोषेण लोभतृष्णादैन्यानृतवादस्तेयप्रतिग्रहा निगृहीता अनसूयया मात्सर्य्यं जितं परोत्कर्षभावनया मदो जितः।

विष्णु। साधु सम्पन्नम् अथ महामोहस्य को वृत्तान्तः।

श्रद्धा। देवि! महामोहोऽपि योगोपसर्गैः सह न ज्ञायते विलीय कुत्रास्तीति।

विष्णु। अस्ति तर्हि महाननर्थशेषः परिहरणीयश्चासौ यतः।

अनादरपरो विद्वानीहमानः परां श्रियम्।
अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत्॥

अथ मनसः को वृत्तान्तः।

श्रद्धा। देवि! तेनापि पुत्रपौत्रादिव्यसनजनितशोकावेशेन जीवोत्सर्गाय व्यवसितम्।

विष्णु। [स्मितं कृत्वा] यद्येवं स्यात् तदा सर्व्व एव वयं कृतकृत्या भवामः पुरुषश्च परां निर्वृतिमापद्यते किन्तु कुतस्तस्य जीवत्यागः।

---

द्यागमानामित्यर्थः। तृष्णादैन्येति दैन्यमत्र याचमानस्य कातरता। अनादरपर इति। परां श्रियमीहमानो विद्वानग्नेः शेषं ऋणाच्छेषं शत्रोः शेषञ्च न शेषये-

श्रद्धा। एवं देव्यां प्रबोधोदयाय गृहीतसङ्कल्पायामचिरादसौ शरीरेणैव न भविष्यति।

विष्णु। तद्भवतु तस्य वैराग्योत्पत्तये वैयासिकीं सरस्वतीं प्रेषयामि [इति निष्क्रान्ताः।] विष्कम्भकः।

ततः प्रविशति मनः सङ्कल्पश्च।

मनः। [साश्रम्] हा पुत्रकाः! क्व गताः स्थ दत्त मे प्रतिवचनं भो भोः कुमारकाः! रागद्वेषमदमानमात्सर्य्यादयः! परिष्वजध्वं मां, सीदन्ति ममाङ्गानि [दिशोऽवलोक्य सवैक्लव्यं] न कश्चिद्दमनार्थं मां सम्भावयति क्व ता असूयादयः कन्यका आशातृष्णादयश्च स्नुषाः कथमपि मे मन्दभाग्यस्य समकालमेव दैवहतकेनापहृताः [सवैक्लव्यम्] अहह!

विसर्पति विषाग्निवद्दहति मर्म्म दावाग्निवत्
तनोति दृढवेदनाः कषति सर्व्वकाषं वपुः।
विलुम्पति विवेकितां हृदि च मोहमुन्मीलय-
त्यहो! ग्रसति जीवितं प्रसभमेष शोकज्वरः॥

[इति मूर्च्छितः पतति]

सङ्क। राजन्! समाश्वसिहि।

मनः। [समाश्वस्य] कथं देवी प्रवृत्तिरपि मामेवमवस्थं न समाश्वासयति।

---

दित्यन्वयः। विष्कम्भक इति शान्तिसाहित्येन विप्रयोज्यत्वात्। विसर्पति विषाग्निर्वर्द्दति। एष शोकज्वरो विषाग्निवद्विसर्पति दावाग्निवन्मर्म्म दहति दृढवेदनाश्च तनोति वपुश्च सर्वकाषं कषति समस्तावयवकषणेन वपुः कषति छिनत्तीत्यर्थः। विवेकिताञ्च विलुम्पति मोहञ्च हृदि उन्मीलयति अहो

श्रद्धा । [ सास्रं ] देव ! कुतोऽद्यापि देवी प्रवृत्तिरिति यतः कुमारव्यसनशोकानलदग्धहृदयास्फोटेन विनष्टा ।

मनः । [ सावेगं ] हा प्रिये ! क्वासि देहि मे प्रतिवचनं ननु,

स्वप्नेऽपि देवि ! रमसे न मया विना त्वं
स्वापे त्वया विरहितो मृतवद्भवामि ।
दूरीकृतासि विधिदुर्ललितैस्तथापि
जीवत्यवेहि मन इत्यसवो दुरन्ताः ॥

[ पुनर्मूर्च्छितः पतति ]

श्रद्धा । राजन् ! समाश्वसिहि समाश्वसिहि ।

मनः । [ समाश्वस्य ] अलमतः परमस्माकं जीवितव्यसनेन सङ्कल्प ! चितां रचय यावदनलप्रवेशेन शोकानलं निर्व्वापयामि ।

[ततः प्रविशति सरस्वती]

सरस्वती । प्रेषितास्मि भगवत्या विष्णुभक्त्या यथा सखि ! गच्छ अपत्यव्यसनदुःखितस्य मनसः प्रबोधाय यथा तस्य वैराग्योत्पत्तिर्भवति तथा यतस्वेति तद्भवतु तत्सन्निधिमेवोसर्पामि [ उपसृत्य ] वत्स ! किमेवमभिभूतोऽसि ननु विदितपूर्व्वैव भवता भावानामनित्यता अधीतानि च त्वयेतिहासाद्युपाख्यानानि तथा हि—

---

जीवितञ्च प्रसभं प्रसतोत्यर्थः । स्वप्नेऽपीति हे देवि प्रवृत्ते ! मया विना त्वं स्वप्नेऽपि न रमसे अहमपि स्वापेऽपि त्वया रहितः सन् मृतवद्भवामि विधिदुर्ललितैर्दूरीकृतासि अहो ! मनस्तथापि जीवत्यतोऽसवः प्राणा दुर-

भूत्वा कल्पशतायुषोऽम्बुजभुवः सेन्द्राश्च देवासुराः
मन्वाद्या मुनयो महीजलधयो नष्टाः पराः कोटयः ।
मोहः कोऽयमहो महानुदयते लोकस्य शोकावहः
सिन्धोः फेनसमे गते वपुषि यत् पञ्चात्मके पञ्चताम् ॥

तद्भावय भावानामनित्यतां नित्यानित्यवस्तुदर्शिनं न च स्पृशति शोकावेशो यतः ।

एकमेव यदा ब्रह्म सत्यमन्यद्विकल्पितम् ।
को मोहः कस्तदा शोक एकत्वमनुपश्यतः ॥

मन: । शोकावेशदूषिते मनसि विवेक एव नावकाशं लभते क्व पुनर्भावानामनित्यता ।

सर । वत्स ! स्नेहदोष एष यतः प्रसिद्धोऽयमर्थः स्नेहः सर्व्वानर्थवीजमिति तथा हि—

उप्यन्ते विषवह्निवीजविषमाः क्लेशाः प्रियाख्या नरै-

---

ना इत्यवेहि । सरस्वती विष्णुभक्तिप्रयुक्ता वैयासिकीत्यर्थः । भूत्वा कल्पेति । पञ्चात्मके पृथिव्यादिपञ्चमहाभूतात्मके सिन्धोः फेनसमे वपुषि पञ्चतां मरणरूपतां प्रत्येकं पञ्चतां गते सति अहो ! यद्दृश्यमाल्लोकस्य शोकावहो मोहो महानुदयते अतः कोऽयमनुचितहेतुकत्वादनिर्वचनीय इति यावत् । ब्रह्मादीनामपि नाशाच्छोकोऽनुचित इति प्रतिपादयति भूत्वेति । अम्बुजभुवो ब्रह्माणः सेन्द्रा देवासुरा मन्वादयो मुनयश्च कल्पशतायुषो भूत्वा महीजलधयश्च पराः कोटयः कोट्यधिका नष्टा अतो विनाशिषु भावेषु शोकानौचित्यमित्यर्थः । नित्यानित्यदर्शनमुपपादयति एकमेवेति । यदा एकमेव ब्रह्म सत्यमन्यत्तु विकल्पितं विकल्पवशात् सिद्धमसत्यमित्यर्थः । तदा एकत्वमनुपश्यतो जनस्य को मोहः कश्च शोकः । विवेक एवेति विवेको विचारः । उप्यन्त इति । नरैर्विषरूपवह्नेर्यद्बीजं तद्वद्विषमाः प्रियाख्याः प्रियजनना-

तेभ्यः स्नेहमया भवन्ति न चिराद्वज्राग्निगर्भाङ्कुराः ।
येभ्योऽमी शतशः कुकूलहुतभुग्दाहं दहन्तः शनै-
र्देहं दीप्रशिखासहस्रविषमा रोहन्ति शोकद्रुमाः ॥

मनः । देवि ! यद्यप्येवं तथापि न शक्नोमि शोकानलदग्धः प्राणान् धारयितुं तत् साधु सम्पन्नं यदन्तकाले दृष्टासि तावत् ।

मर । इदञ्चापरमसत्यं यदात्महत्याव्यवसाय इति अपि च अमीषामपकारिणामर्थे कोऽयमत्यन्तावेशो भवतां तथा हि—

क्वचिदुपकृतिः कार्य्यामीभिः कृता क्रियतेऽथवा
न हि न हि भवन्त्येते पुंसां सुखाय परिग्रहाः ।
दधति विरहे मर्म्मच्छेदं तदर्थमपार्थकं
तदपि विपुलायासाः सीदन्त्यहो ! वत जन्तवः ॥

अपि च, तीर्णाः पूर्णाः कति न सरितो लङ्घिताः के न शैला-

मानः क्लेशा उप्यन्त आरोप्यन्त इत्यर्थस्तथा च विषवल्लिबीजवत् प्रियजनरूपाण्यपि वीजान्यारोप्यन्त इत्यर्थः । तेभ्यः स्नेहमया वज्राग्निगर्भाङ्कुरामचिरादचिराद्भवन्ति येभ्योऽङ्कुरेभ्योऽमी शतशः शोकद्रुमा रोहन्ति जायन्ते कीदृशाः कुकूलहुतभुग्दाहं कुकूलास्तुषास्तदीयाग्निस्तद्दाहेन दहन्तः कीदृशा दीप्रेण शिखासहस्रेण विषमा । क्वचिदिति । अमीभिः पुत्रपौत्रादिभिः क्वचिदुपकृतिः कार्य्या करिष्यमाणा कृता अथवा क्रियते न हि नैवेत्यर्थः । एते परिग्रहाः पुत्रादिबान्धवाः पुंसां सुखाय न हि भवन्ति यतः पुमांसस्तेषां परिग्रहाणां विरहे सति अपार्थकं निरर्थकं तदर्थमात्मनो मर्म्मच्छेदं दधति बिभ्रति तदपि तथाप्यमी जन्तवोऽहो आश्चर्यं वत खेदे सीदन्तीत्यर्थः । मनोविशिष्टपुरुषत्वेनैव मनसोऽध्यासात् तं पुरुषं प्रत्येवाह तीर्णा इति । एभिर्लोभादिभिः पापैर्दुर्वृत्तैः किमिव दुरितं कारितो

नाक्रान्ता वा कति वनभुवः क्रूरसञ्चारघोराः।
पापैरेभिः किमिव दुरितं कारितो नासि कष्टम्
यद्दृष्टास्ते धनमदहतसौम्लानवक्त्रा दुरीशाः॥

मनः। देवि! एवमेवैतत् तथापि।

लालितानां स्वजातानां हृदि सञ्चरतां चिरम्।
प्राणानामिव विच्छेदो मर्म्मच्छेदादरुन्तुदः॥

धर। वत्स! ममतानिबन्धनोऽयं व्यामोहः उक्तञ्च।

मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे।
न तादृङ्ममताशून्ये कलविङ्केऽथ मूषिके॥

तत् सर्व्वथा सर्व्वानर्थवीजस्य ममत्वस्योच्छेदे यत्नः कार्य्यः पश्य

प्रादुर्भवन्ति वपुषः कति वा न कीटा
यान् यत्नतः खलु तनोरपसारयन्ति।

---

नासि। किमिवेत्यत्र वशब्दः सम्भावनायाम्। यद्दृष्टयसाद्धनमदेन मलीवनुन्नानं वक्त्रं येषां तादृशा दुरीशास्ते प्रसिद्धाः कष्टं यथा स्यात्तथा दृष्टाः। तेषां दर्शनमपि नातिप्रयासं विनेति दर्शयति तीर्णा इति। अर्थाद्धनिनां सा-न्निध्याय पूर्णाः कति सरितो न तीर्णास्त्वयेति शेषः के शैला न लङ्घिताः क्रूराणां व्याघ्रादीनां सञ्चारेण घोराः कति वनभुवो नाक्रान्ता इत्यर्थः। लालितानामिति स्वजातानां स्वस्माज्जातानां पुत्रादीनां विच्छेदो मर्म्मच्छेदा-दप्यधिकोऽरुन्तुद इत्यर्थः कीदृशानां चिरं हृदि सञ्चरतां वक्षस्यारोपिता-नामित्यर्थः। मार्जारेति गृहकुक्कुटे गृहपोषितकुक्कुटे मार्जारेण भक्षिते सति यादृशं दुःखं ममताशून्ये कलविङ्के चटकेऽथवा मूषिके मार्जारेण भक्षिते सति न तादृशं दुःखमित्यर्थः। अथेत्यथवा इत्यर्थे। प्रादुर्भवन्तीति। शरीरात् कति वा कीटा न प्रादुर्भवन्ति यान् कीटांस्तनोः शरीराद्यत्नतोऽपसारयति

मोहः क एष जगतां यदपत्यसंज्ञां
तेषां विधाय परिशोषयति स्वदेहम् ॥

मनः । देवि ! भवत्वेवं तथापि दुरुच्छेदो ममत्वग्रन्थिरिति मन्ये तथा च ।

निरन्तराभ्यासदृढीकृतस्य तत्स्नेहसूत्रग्रथितस्य जन्तोः ।
जानासि कच्चिद्भगवत्युपायं ममत्वपाशस्य यतोविमोक्षः ॥

शर । वत्स ! भावानामनित्यताभावनमेव तावन्ममत्वच्छेदस्य प्रथमोऽभ्युपायस्तथा हि—

न कति पितरो दाराः पुत्राः पितृव्यपितामहा-
वहति वितते संसारेऽस्मिन्मृतास्तव कोटयः ।
तदिह सुहृदो विद्युत्पातोज्ज्वलान् क्षणसङ्गमान्
सपदि हृदये भूयोभूयो निधाय सुखीभव ॥

मनः । भगवति ! तव प्रसादादपास्त एव व्यामोहः किन्तु ।

तव मुखशशधरदीधितिगलितैर्विमलोपदेशपीयूषैः ।
क्षालितमपि मे हृदयं मलिनं शोकोर्म्मिभिः क्रियते ॥

---

तस्माज्जगतः कोऽयं मोहो यस्तेषामपत्यसंज्ञां विधाय तद्वियोगे स्वदेहं परिशोषयतीत्यर्थः । निरन्तरेति । हे भगवति ! यतो यस्मादुपायाज्जन्तोर्ममत्वपाशस्य विमोक्षस्तमुपायं जानासि अपि तु जानासीति शिरश्चालनाद्गम्यः प्रश्नः । ममत्वपाशस्य कीदृशस्य निरन्तराभ्यासेन सततानुशीलनेन दृढीकृतस्य तत्स्नेहसूत्रग्रथितस्य ममत्वपात्रविषयस्नेहरूपसूत्रनिर्म्मितस्य । न कतीति । वहति धारावाहिके विततेऽस्मिन् संसारे तव कोटयो जनकादयोमृतास्तस्मादिह संसारे भूयोभूयो वारंवारं सुहृदः पुत्रादीन् विद्युत्पातवदुज्ज्वलान् क्षणसङ्गमान् हृदये निधाय सुखीभव । तव मुखेति । तवेत्यादिगलितैर्विमलोपदेशरूपैः पीयूषैरमृतैः क्षालितमपि हृदयं शोकोर्म्मिभिः

तदस्यार्द्रस्य प्रहारस्य भेषजमार्य्या आज्ञापयतु भवती ।

सर० । ननूपदिष्टमेव मुनिभिः ।

अकाण्डपातजातानामार्द्राणां मर्म्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥

मनः । भगवत्येवमेवैतद्दुर्निवारन्तु चेतो यतः ।

यद्येतद्वारितं चिन्तासन्तानैरभिभूयते ।
मुहुर्वाताहतैर्विम्बमम्भश्छेदैरिवैन्दवम् ॥

सर० । वत्स ! श्रूयतां क्वचिच्छान्ते विषये चेतो निवेश्यताम्

मनः । तदाज्ञापयतु भगवती कोऽसौ शान्तो विषयः ।

सर० । वत्स ! गुह्यमेतत्तथापि आर्त्तानामुपदेशे न दोषः ।

नित्यं स्मरे जलदनीलमुदारहार-
केयूरकुण्डलकिरीटधरं हरिं वा ।
ग्रीष्मेषु शीतमिव वा ह्रदमस्तशोकं
ब्रह्म प्रविश्य भज निर्वृतिमात्मनीनाम् ॥

मनः । [ विचिन्त्य सोच्छ्वासं ] सर्वथा त्रातोऽहं भगवत्या [ इति पादयोः पतति ]

सरः । वत्स ! सम्प्रत्युपदेशसहिष्णु ते हृदयं जातमत एवापरमुच्यते ।

---

पुनर्मार्जनं क्रियत इत्यर्थः । अकाण्डेति । अकाण्डपातोऽकस्माच्छोकस्य निमित्तोपस्थितिस्तेन जातानां गाढशोकात्मकप्रहाराणामित्यर्थः । नित्यं स्मरेरिति । निरन्तरं शरीरविशिष्टेश्वरभावनायोगानुध्यानं वेति सांसारिकदुःखोच्छेदस्योपायद्वयं तद्धृदयमर्द्धद्वयेनाह नित्यमित्यादि ग्रीष्म इत्यादि च । जलदेत्यादिविशेषणविशिष्टं वा हरिं नित्यं त्वं स्मरेः । अस्तः शोको यस्मात् तादृशं ब्रह्म योगानुशीलनात् प्रविश्य वा आत्मनीनां

वशं प्राप्ते मृत्योः पितरि तनये वा सुहृदि वा
शुचा सन्तप्यन्ते भृशमुदरताड़ं जड़धियः ।
असारे संसारे विरसपरिणामे तु विदुषां
वियोगो वैराग्यं द्रढयति वितन्वञ्छमसुखम् ॥

ततः प्रविशति वैराग्यम् । [ विचिन्त्य ]

अस्नाय्वस्थिनवनीलनीरजदलोपान्तातिसूक्ष्मायत-
त्वङ्मात्रान्तरितामिषं यदि वपुर्नैतत् प्रजानाम्पतिः ।
प्रत्यग्रस्फुरदस्रमिश्रपिशितग्रासग्रहं गृह्णतो
गृध्रध्वाङ्क्षवृकान् स्तनौ निपततः को वा कथं वारयेत् ॥

अपि च । यदा लोला लोला विषयजरसाः प्रान्तविरसा

---

ऽभेदेनात्मसम्बन्धिनीं निर्वृतिमानन्दं भज पीयूषकाले शीतं ह्रदं प्रवि-श्येव ब्रह्मण आनन्दस्वरूपत्वेनानन्दस्यात्मनीनत्वम् । वशं प्राप्त इति । जड़धियो जनाः पित्रादौ मृत्योर्वशं प्राप्ते सति उदरताड़म् उदरं ताड़यित्वा शुचा सन्तप्यन्ते विदुषां तु तेषां पित्रादीनां वियोगो वैराग्यं द्रढयति वियोगः कीदृशः शमसुखं शान्तिसुखं वितन्वन् । वैराग्यमुत्पाद्य शरीरस्य बीभत्सतया वैराग्यहेतुत्वं दर्शयति अस्नाय्वी-दिति । प्रजानाम्पतिरेतद्वपुर्यदि नवनीलनीरजदलस्य य उपान्तस्तद्वदति-सूक्ष्मेणायतेन त्वङ्मात्रेण चर्ममात्रेणान्तरितमामिषं यस्य तादृशं नास्ना-य्वीव सृष्टवान् स्यात् तदा गृध्रध्वाङ्क्षवृकांस्तनौ निपततः को वा कथं वारयेत् ध्वाङ्क्षाः काकाः वृकाः क्षुद्रव्याघ्राः । गृध्रध्वाङ्क्षवृकान् कीदृशान् प्रत्यग्रं तत्कालं स्फुरता चर्मावरणाभावात् स्रवता अस्रेण शोणि-तेन मिश्रं यत् पिशितं तद्ग्रासार्थं यत्नेन गृह्णतो मांसार्थित्वात् तेषां यदा लोलेति । यद्यपीत्यर्थे यदा यद्यपि विषयजन्या रसा लोलावद्विद्युद्-

विपद्देहं देहं महदपि धनं भूरिनिधनम्।
गुरुः शोको लोकः सततमबलानर्थबहुला
तथाप्यस्मिन् घोरे पथि वत रता नात्मनि रताः॥

स्वर। वत्स! एतद्वैराग्यं त्वामुपस्थितं तदेतत् सम्भावय।

मनः। क्वासि पुत्रक!

वैरा। अभिवादये।

मनः। वत्स! जायमानेन त्वया परित्यक्तोऽस्मि तत् परिष्वजस्व माम्।

वैरा। [तथा करोति]

मनः। वत्स! त्वद्दर्शनात् प्रशान्तो मे शोकावेशः।

वैरा। कोऽत्र शोकावेशः।

पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्राम्यतां
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां यदा
सिद्धो भूरिवियोग एव विदुषां शोकोदयः कस्तदा॥

मनः। [सानन्दं] देवि! एवमेतद्यदाह वत्सः संप्रति हि—
नार्य्यस्ता नवयौवना मधुकरव्याहारिणस्ते द्रुमाः

---

स्वबलाः प्रान्ते पर्य्यन्ते विरसाः देहं देहं प्राप्य विपत् प्रतिदेहे विपदि-त्यर्थः। गुरुः शोको यस्य लोकजनस्तादृशः। अलुक्समासोऽयम्। अबला सततमनर्थबहुला तथाप्यस्मिन् घोरे पथि संसारवासनारूपे घोरे दुःखहेतौ पथि वत खेदे जना रता न त्वात्मनि ब्रह्मणि रता इत्यर्थः। पान्थानामि-वेति। पित्रादीनां संयोगोयदा पान्थानां वर्त्मनीव नद्यां भ्राम्यतां क्षिति-रुहामिव पुष्करे गगने मेघानामिव जलनिधौ सांयात्रिकाणां वणि-जामिव भूरिवियोगः सिद्धो विदुषां शोकोदयस्तदा कुत इत्यर्थः। नार्य्यस्ता

प्रोन्मीलन्नवमालिकासुरभयो मन्दास्त एवानिलाः।
अद्योदात्तविवेकमार्जिततमस्तोमावलीकं पुन-
स्तानेतान्मृगतृष्णिकार्णवजलप्रायान्मनः पश्यति॥

धर। वत्स ! यद्येवं गृहिणा तदा मुहूर्त्तमप्यनाश्रमिणा न भवितव्यं तदद्यप्रभृति निवृत्तिरेव ते धर्म्मचारिणी भवत्विति।

मनः। [ सलज्जं ] यदादिशति देवी।

धर। वत्स ! शमदमसन्तोषादयश्च पुत्रास्त्वामुपचरिष्यन्ति यमनियमादयश्चामात्याः विवेकोऽपि त्वदनुग्रहादेवोपनिषद्देव्या सह यौवराज्यमनुभवतु एताश्च मैत्र्यादयश्चतस्रो भगिन्यो भगवत्या विष्णुभक्त्या त्वत्प्रसादनाय प्रेषितास्ता एताः सप्रसादमनुनय।

मनः। यदादिशति भगवती मूर्द्धनि निवेशिताः सर्व्वा एवाज्ञाः [ इति सहर्षं पादयोः पतति ]

धर। वत्स ! यमनियमासनप्राणायामादयश्च सादरमायुष्मता द्रष्टव्या एभिरेव सहेदानीमायुष्मान् साम्राज्यमनुतिष्ठतु अपि च त्वयि स्वास्थ्यमापन्ने क्षेत्रज्ञोऽपि स्वां प्रकृतिमापत्स्यति यतः।

त्वत्सङ्गाच्छाश्वतोऽयं प्रभवलयजरोपप्लवो बुद्धिवृत्ति-

---

इति। अद्य मन उदात्तविवेकेन मार्जिता अपसारिता तमस्तोमावली अज्ञानपुञ्जश्रेणी यत्र तादृशं सत् पुनस्तानेतान् सम्प्रति मृगतृष्णिकायां भ्रमवशाज्जलप्रायान् पश्यति मिथ्यात्वेन जानातीत्यर्थः। तानेतान् कानित्याह नार्य्य इति पूर्व्वार्द्धं स्पष्टम्। अमात्या इत्यन्तस्याप्युपचरिष्यन्तीत्यर्थः। क्षेत्रज्ञः परमात्मा। त्वत्सङ्गादिति। शाश्वतो नित्योऽयमात्मा देवः कोऽपि

ह्येको नानेव देवो रविरिव जलधेर्वीचिषु व्यस्तमूर्त्तिः ।
तूष्णीमालम्बसे चेत् कथमपि वितता वत्स ! संहृत्य वृत्ती-
र्भात्यादर्शे प्रसन्ने मुखमिव सहजानन्दसान्द्रस्तदात्मा ॥

तद्भवत्विदानीं ज्ञातीनामुदकक्रियायै भागीरथीमवतराम: ।

मनः । यदादिशति देवी [ इति निष्क्रान्ताः सर्व्वे ]

[ वैराग्योत्पत्तिर्नाम पञ्चमोऽङ्कः ]

## षष्ठोऽङ्कः ।

[ ततः प्रविशति शान्तिः ]

शान्तिः । आदिष्टास्मि महाराजविवेकेन यथा विदितमेव भवत्या यथा किम् ।

अस्तं गतेषु तनयेषु विलीनमोहे
वैराग्यभाजि मनसि प्रशमं प्रपन्ने ।

---

जलधेर्वीचिषु व्यस्तमूर्त्तिरेको रविरिव बुद्धिवृत्तिषु नानेव सन् प्रभवलयज-रोपप्लव; प्रभव उत्पत्तिर्लयो मरणं तादृश उपप्लव आपद्‌यस्य तत्सञ्ज्ञा-स्तादृशः । हे वत्स ! त्वञ्चेद्विततावृत्तीः सांसारिकस्य व्यवसायान् संहृत्य तूष्णीमालम्बसे निर्व्यापारत्वमाश्रयसि तदा प्रसन्ने आदर्शे मुखमिवैकतां भाति कीदृशः सहजानन्देन सान्द्रो व्याप्तः । व्याप्तिरत्राभेदेन बोध्या । इति पञ्चमाङ्कविवरणम् ।

अस्तं गतेष्विति । तनयेषु कामक्रोधादिषु अस्तं गतेषु सत्सु विलीन: प्रलायितो मोहो यस्मात्तादृशे मनसि प्रथमं विषयवैराग्यं प्रपन्ने सति

क्लेशेषु पञ्चसु गतेषु शमं समन्तात्
तत्त्वावबोधमभितः पुरुषस्तनोति ॥

भगवती त्वरितं देवीमुपनिषदमनुनीय मत्सकाशमानयत्विति [विलोक्य] अये! अम्बा श्रद्धा प्रहर्षं किमपि मन्त्रयन्ती इत एवाभिवर्त्तते ।

[ततः प्रविशति श्रद्धा]

श्रद्धा । अये! अद्य खलु राजकुलमालोक्य चिरेण पीयूषेणेव लोचने पूर्णे ।

असतां निग्रहो यत्र सन्तः पूज्या यमादयः ।
आराध्यते जगत्स्वामी वश्यैर्देवोऽनुजीविभिः ॥

शान्तिः । [उपसृत्य] अम्ब! किं मन्त्रयन्ती क्व प्रस्थितासि ।

श्रद्धा । पुत्रि! [असतामित्यादि पठति]

शान्तिः । अथ मनसि कीदृशी स्वामिनः प्रवृत्तिः ।

श्रद्धा । यादृशी बध्ये निग्राह्ये भवति ।

शान्तिः । तत् किं स्वाम्येव स्वाराज्यमलङ्करिष्यति ।

श्रद्धा । एवमेवैतद्यद्यात्मानमेव प्रतिसन्धत्ते तदा स्वाराट् सम्राड्वा भविष्यति ।

---

पञ्चसु मदमात्सर्य्यरागमानद्वेषरूपेषु क्लेशेषु शमं नाशं गतेषु सत्सु पुरुषः परमात्मा तत्त्वावबोधमभितः सर्व्वदिक्षु तनोतीति भविष्यत्सामीप्ये वर्त्तमानता पुरुष आसन्नतत्त्वावबोध इत्यर्थः । राजकुलं राजधानीं विवेकस्येति शेषः । असतामित्यादि । असतां कामक्रोधादीनां वश्यैरनुजीविभिर्यमनियमादिभिर्जगत्स्वामी परमात्मा । स्वामिनः पुरुषस्य परमात्मनः स्वाराज्यं स्वर्गराज्याधिपत्यं साम्राज्यं सकलराजाधिराजत्वम् ।

शान्तिः । अथ देवस्य मायायां कीदृशोऽनुग्रहः ।

श्रद्धा । निग्रह इति वक्तव्ये कथमनुग्रहः पृच्छ्यते देवो हि मायां सर्व्वानर्थवीजमियमिति सर्वथेयं निग्राह्येति मन्यते ।

शान्तिः । यद्येवं तर्हि इदानीं राजकुलस्य स्थितिः ।

श्रद्धा । शृणु ।

नित्यानित्यविचारणा प्रणयिनी वैराग्यमेकं सुहृत्
सन्मित्राणि यमादयः शमदमप्रायाः सखायो मताः ।
मैत्राद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा बला-
दुच्छेद्या रिपवश्च मोहममतासङ्कल्पसङ्गादयः ॥

शान्तिः । अथ धर्म्मस्य स्वामिनि कीदृशः प्रणयः ।

श्रद्धा । वैराग्यसन्निकर्षात् प्रभृति नितान्तमिहामुत्र च भोगविरसः स्वामी तेन सः ।

नरकादिव पापफलाद्भयं भजति पुण्यफलादपि नाशिनः ।
इति समुज्झितकामसमन्वयः सुकृतकर्म्म कथन्वनुमन्यते ॥

किन्त्वसौ प्रत्यक्प्रवणतां स्वामिनो विचिन्त्य कृतकृत्यतामिवा-

---

देवो हीति मायां सर्व्वानर्थेत्यादिरूपां मन्यत इत्यर्थः । राजकुलस्य राजधानीस्थतल्लोकस्य स्थितिर्व्यवहारः । नित्यानित्येति । प्रणयिनी सखी मतेरिति शेषः सुहृन्मनस इति शेषः सुहृत्त्वात् प्रीतिकृत् मित्राणि च प्रबोधोदयकार्य्ये सहायाः सखायश्च कार्य्योपदेष्टार इति भेदस्तत् सर्व्वं मनसो बोध्यं सहचरी पत्नी पुरुषस्येति शेषः । बलादुच्छेद्या रिपवोऽपि पुरुषस्य बोध्याः सङ्कल्पः कामिनः कर्म्म मानसं सङ्गो विषयासङ्गः । नरकादिवेति स्वामी पापस्य फलान्नरकादिव पुण्यस्य फलादपि विभेति यतो नाशिन इत्यतो हेतोः समुज्झितकामसमन्वयस्त्यक्तकामनासम्बन्धः कथं सुकृतं कर्म्म सुकृतजनकं कर्म्म अनुमन्यते नैवानुमन्यत इत्यर्थः । प्रत्यक्प्रवणतां प्राति-

त्मनो मत्वा स्वयमेव धर्म्मः स्वव्यापारोऽयं भूतः ।

शान्तिः । अथ यानुपसर्गानादाय महामोहो लीनस्तिष्ठति तेषां को वृत्तान्तः ।

श्रद्धा । दुरवस्थां गतेनापि महामोहहतकेन स्वामिनः प्ररोचनाय मधुमत्या सहोपसर्गाः प्रेषिता अयञ्चाभिप्रायो यदेतेष्वेवायं स्वामी विवेकोपनिषद्दोश्चिन्तामपि न करिष्यतीति ।

शान्तिः । ततस्ततः ।

श्रद्धा । ततस्तैर्गत्वा कापि स्वामिन्यैन्द्रजालिकी विद्याप्रदर्शिता तथाहि—शब्दानेष शृणोति योजनशतादाविर्भवन्त्यश्रुता

स्ते ते वेदपुराणभारतकथा गाथादयो वाङ्मयाः ।
ग्रथ्नाति स्वयमिच्छया शुचिपदैः शास्त्राणि काव्यानि वा
लोकान् भ्राम्यति पश्यति स्फुटरुचो रत्नस्थलीर्मेरवीः ॥

मधुमतीञ्च भूमिमापन्नस्तत्स्थानाभिमानिनीभिर्देवताभिरुपच्छन्द्यते भो इहास्यतां नात्र जरा मृत्युरनुपाधिरमणीयोऽयमेष त्वामुपस्थितो विविधवेशविलासलावण्यमयो मङ्गलाद्यर्घ्य-

---

कूल्यगामित्वम् । स्वामिनः प्ररोचनायेति सांसारिकसुखार्थमित्यर्थः । मधुमती सिद्धिविशेषो यया सर्व्वभोग्योपस्थितिरकामेनापि भवति उपसर्गा योगोपसर्गा अणिमलघिमादयः । शब्दानेष इत्यादि । एष स्वामी योजनशतादपि शब्दाञ्छृणोति अश्रुता अपि ते ते प्रसिद्धाः पुराणादीनां गाथादयो गीतादय आदिपदात् कवित्वानि चाविर्भवन्ति वाङ्मया वाक्यस्वरूपाः । लोकान् भ्राम्यति पादचारं विनेति शेषः । मैरवीर्मेरुसम्बन्धिनी रत्नस्थलीः पश्यति कीदृशीः स्फुटरुच उज्ज्वलप्रभाः । मधुमतीञ्चेति मधुमतीं भूमिं सिद्धिमापन्नः पुरुषस्तत्स्थानाभिमानिनीभिर्मैरवस्थानाभिमानं पुरुषस्य जनयन्तीभिर्देवताभिरुपच्छन्द्यते प्रतार्य्यते । उपच्छन्दनाकारमाह भो इत्यादि । रमणीयोऽयमित्यत्र देश इति शेषः । एष त्वामुपस्थितो विद्याधरी-

पाणिः प्रणयपेशलो विद्याधरीजनस्तदिह ।
कनकसिकतिनस्थलीः स्रवन्तीः पृथुजघनाः कमलानना घनोरूः ।
मरकतदलकोमला वनालीर्भज निजपुण्यजितांश्च सर्वभोगान् ॥

शान्तिः । ततस्ततः ।

श्रद्धा । पुत्रि ! तदाकर्ण्य मायया श्लाघ्यमेतदित्युक्तं मनसा चानुमोदितं सङ्कल्पेन च प्रोत्साहितं स्वामी च सम्प्रतिपत्तिमिवापन्नः ।

शान्तिः । [सखेदं] हा धिक् ! तामेव संसारवागुरामभिपतितः स्वामी ।

श्रद्धा । न खलु खलु ।

शान्तिः । ततस्ततः ।

श्रद्धा । पुनस्तत्पार्श्ववर्त्तिना तर्केण तान् सर्व्वान् क्रोधावेशकषायितनेत्रमालोक्याभिहितः स्वामी स्वामिन् ! किमेभिर्विषयामिषगृध्नुभिरास्थानीतर्कैः पुनरपि तेष्वेव विषयविषमाङ्गारेषु निपात्यमानमात्मानं नावबुध्यसे ननु भोः !

---

जन इत्यन्वयः । वेशो मण्डनं विलासो हेलालीलादि लावण्यं सौन्दर्य्यं मङ्गलादीति मङ्गलार्थादिपाणिरित्यर्थः प्रणयो वात्सल्यं तेन पेशलो मनोहरः । कनकसिकतिनेति । सिकतिनेतीनप्रत्ययः स्वरान्तः कनकसिकतायुक्तानि स्थलानि यासां तादृशीः स्रवन्तीर्नदीः घनोरूर्विपुलत्वेन परस्परसंसक्ताः कमलाननाः मरकतनिष्पन्नदलावनश्रेणीश्च निजपुण्यजितानेतद्भिन्नसर्व्वभोगांश्च भजेत्युपच्छन्दयत इत्यर्थः । सम्प्रतिपत्तिं सम्मतिम् । आस्थानीतर्कैरिति आस्थानी सभा तत्र वक्तृभिर्नानाविधं प्रयुज्यमानत्वान्निश्चाररहिता एव तर्का भवन्ति तादृशैरेभिः किमित्यर्थः । आस्थानीवर्कैरिति पाठान्तरं

भवसागरतारणाय या सुचिराद्योगतरिः समाश्रिता ।
अधुना परिमुच्य तां मदात् कथमङ्गारनदी विगाह्यते ॥

शान्तिः । ततस्ततः ।

श्रद्धा । ततस्तद्वचनमाकर्ण्य स्वस्ति विषयेभ्य इत्यभिधायावधीरिता मधुमती ।

शान्तिः । साधु साधु अथ क्व प्रस्थिता भगवती ।

श्रद्धा । आदिष्टास्मि स्वामिना यथा द्रष्टुं विवेकमिच्छामि ततस्त्वरितं भवतीति तदहं महाराजसकाशं प्रस्थितास्मि ।

शान्तिः । अहमपि महाराजेनोपनिषदमानेतुमादिष्टास्मि । तद्भवतु स्वामिनो नियोगं सम्पादयावः [इति निष्क्रान्ते प्रवेशकः ]

ततः प्रविशति पुरुषः ।

पुरु । [विचिन्त्य सहर्षम्] अहो ! माहात्म्यं भगवत्या विष्णुभक्त्या यत्प्रसादान्मया ।

तीर्णाः क्लेशमहोर्म्मयः परिहृता भीमा ममत्वभ्रमाः
क्रान्ता मित्रकलत्रबन्धुमकरग्राहग्रहग्रन्थयः ।

---

तत्र च पक्वैर्धूर्त्तैः सभाधूर्त्तैरित्यर्थः । भवसागरतारणायेति । या योगरूपा तरिर्भवसागरतारणाय सुचिरात् त्वया समाश्रिता अधुना मदात्तां परित्यज्य कथमङ्गारमयी नदी विगाह्यत इत्यर्थः । प्रवेशक इति शान्तिश्रद्धाप्रयोज्यत्वात् । तीर्णा इति । यस्या विष्णुभक्तेः प्रसादान्मया संसारवारां निधेः परमेव पारं तादृशं तीरमवाप्तकल्पमत्यासन्नमिष्टप्राप्तिकम् । अधुना लङ्घितव्यमित्यर्थः । सहृद्धर्म्मान् रूपयन्नाह तीर्णा इति याचनादिक्लेशा एव महोर्म्मयस्तीर्णाः ममत्वरूपा भ्रमा आवर्त्ता भीमा भीषणाः परिहृता अस्पृष्टाः मित्रादिरूपा ये मकरग्राहा हिंस्रजलजन्तवस्तेषां ग्रहो ग्रासस्तद्रूपा ग्रन्थयो

क्रोधो वाग्निरपाकृतो विघटितास्तृष्णालताग्रन्थयः
प्रारं तीरमवाप्तकल्पमधुना संसारवारां निधेः॥

ततः प्रविशति उपनिषत् शान्तिश्च।

उप। सखि! कथं तथा निरनुक्रोशस्य स्वामिनो मुखमालोकयिष्यामि येनाहमितरजनयोषेव सुचिरमेकाकिनी परित्यक्ता।

शान्तिः। देवि! कथं तथाविधविपत्पतितो देवो देव्या उपालभ्यते।

उप। सखि! न दृष्टा त्वया तादृशी दशा येन त्वमेवं ब्रवीषि शृणु।

बाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूड़ारत्नग्रहनिकृतिभिर्दूषितः केशपाशः।
कैः कैर्नाहं हतविधिवशादीहिता दुर्व्विदग्धै-
र्दासीकर्त्तुं सपदि दुरितैर्दूरसंस्थे विवेके॥

शान्तिः। सर्व्वमेतन्महामोहस्य दुर्व्विलसितं नात्र देवस्यापराधस्तेन हि तथा तथा मनः कामादिद्वारेण प्रबोधयता

---

ाश्मनानि क्रान्ता लङ्घिता इत्यर्थः क्रोधरूपो वड़वाग्निरपाकृतस्त्यक्तः तृष्णारूपास्तीरसन्निधौ लताग्रन्थयो विघटिता अपसारिता इत्यर्थः। निरनुक्रोशस्य निर्दयस्य चिरकालमुपेक्षणात्। स्वामिनो विवेकस्य। देवो विवेकः। बाह्वोर्भग्ना इति। विवेके विचार्य्य तत्त्वार्थनिर्णयरूपे मत्स्वामिनि दूरसंस्थे सति मां दासीं कर्त्तुं व्यव्याख्यातार्थपरतया स्ववशां कर्त्तुं कैः कैर्दुर्व्विदग्धैर्दुरितैः पापैस्तत्तच्छास्त्रैर्नाहं सपदि हतविधिवशादीहिता चेष्टिता तत्तच्चेष्टामाह बाह्वोरिति बलादाकर्षणे बाह्वोः कङ्कणानां श्रेणयो दलितमणयः सद्यो भग्नाः चूड़ारत्नग्रहणरूपाभिर्निकृतिभिस्तिरस्कारैः केशपाशो दूषितः। तेन हीति महामोहेन कामादिद्वारेण मनस्तत्परतरं तथा

अतो दूरीकृतो विवेक एतदेव कुलस्त्रीणां नैसर्गिकं शीलं यद्वि-प्रतिपतितस्य स्वामिनः समयप्रतीक्षणमिति तदेहि दर्शनेन प्रियालापेन च सम्भावय देवं सम्प्रत्यपहृता विद्विषः पूर्णास्ते मनोरथाः।

उप। सखि! प्रत्यागच्छन्ती वत्सया गीतया सरहस्य-मिदमुक्ता यथा भर्त्ता स्वामी च पुरुषस्त्वया यथा प्रश्नमुत्तरेण सम्भावयितव्यस्तथा च प्रबोधोत्पत्तिर्भविष्यतीति साहं गुरूणां समक्षं कथं धार्ष्ट्यं करिष्यामि।

शान्तिः। अविचारणीयमेतद्वाक्यं भगवत्या विष्णुभक्त्या-प्ययमर्थो विवेकस्वामिनोक्तस्तदेहि सम्भावय दर्शनेन भर्त्ता-रमादिपुरुषञ्च।

उप। यथा वदति प्रियसखी [ इति परिक्रामति ]

ततः प्रविशति राजा श्रद्धा च।

राजा। श्रद्धे! अपि द्रक्ष्यति शान्तिः प्रियामुपनिषदम्।

श्रद्धा। देव! गृहीतोऽहं शैव शान्तिर्गता कथं तां न द्रक्ष्यति।

राजा। कथमिव।

श्रद्धा। देव! प्रागेव कथितमेतद्देव्या विष्णुभक्त्यासीत् यन्मन्दराभिधाने विष्णोरायतने देव्या गीतया सह तर्कविद्या-भयादनुप्रविष्टेति।

---

तथाऽस्मदर्थं प्रबोधयतेत्यर्थः। गुरूणां श्वशुराणामादिपुरुषाणाम्। गृहीतोऽहं यस्मात्तदीयस्थितिस्थाना विष्णुभक्त्यासीदिति प्रागेव कथितमासीदि त्यर्थः। तर्कविद्याभयादिति आत्मनानात्वप्रतिपादकत्वात्तस्या एकत्ववादिन

राजा । कथं पुनस्तर्कविद्याभयम् ।

श्रद्धा । तमेनमथ सैव प्रस्तोष्यति तदागच्छतु देव एष स्वामी भगवदागमनमनुध्यायन् विविक्ते वर्त्तते ।

राजा । [ उपसृत्य ] स्वामिन्नभिवादये ।

पुरु । वत्स ! प्रक्रमविरुद्धोऽयं समुदाचारः यतो ज्ञान वृद्धतया भवानेवास्माकमुपदेशदानेन पितृभावमापन्नः ।
पुरा हि धर्म्माध्वनि नष्टसंज्ञा देवास्तमर्थं तनयानपृच्छन् ।
ज्ञानेन सम्यक् परिगृह्य चैतान् हे पुत्रकाः ! संशृणुतेत्यवोचन् ॥
तद्भवान् बहुधा पितृत्वेनास्माकं वर्त्तत इत्येष धर्म्मः ।

शान्तिः । देवि ! एष स्वामी विवेकेन सह विविक्ते वर्त्तते तदुपसर्पतु देवी ।

उप । [ उपसर्पति ]

शान्तिः । स्वामिन्नेषोपनिषद्देवी स्वामिनः पादवन्दनायागता

पुरु । न खलु न खलु यतो मातेयमस्माकं तत्त्वप्रबोधोदयेन तद्देवास्माकं नमस्या अथ वा ।

अनुग्रहविधौ देव्या मातुश्च महदन्तरम् ।
माता गाढं निबध्नाति देवी बन्धं निकृन्तति ॥

उप । [ विवेकमालोक्य नमस्कृत्य दूरे उपविशति ]

---

उपनिषदो भयम् । समुदाचारः सम्भाषणम् । पुरा हीति मार्कण्डेयपुराणेऽयमितिहासः धर्म्माध्वनि धर्मपथे नष्टसंज्ञा देवा स्तमर्थं स्वतनयानपृच्छन् ततस्ते इत्यध्याहार्य्यं तेन तनयामेतान् देवाः हे पुत्रकाः ! संशृणुत इत्यवोचन् किं कृत्वा ज्ञानेन सम्यगर्थं परिगृह्येत्यर्थः । उपनिषदं पुरुषो मातरमुक्त्वा मातृतोऽप्याधिक्यं साधयति अनुग्रहविधाविति माता गाढमिति

पुरु । अम्ब ! कथ्यतां क्व भवत्या नीता एते दिवसाः ।

उप । स्वामिन् !

नीतान्यमूनि मठचत्वरशून्यदेवा-
गारेषु मूर्खमुखरैः सह वासराणि ।

पुरु । अथ जानन्ति ते भवत्यास्तत्त्वम् ।

उप । न खलु न खलु किन्तु ।

ते स्वेच्छया मम गिरां द्रविड़ाङ्गनोक्त-
वाचामिवार्थमविचार्य्य विकल्पयन्ति ॥

तेन तेषां केवलं परार्थग्रहणप्रयोजनकमेव मद्धिधारणम् ।

पुरु । ततस्ततः ।

उप । ततः कदाचित् ।

कृष्णाजिनाग्निसमिदाज्यजुहूस्रुवादि-
पात्रैस्तथेष्टिपशुसोममुखैर्मखैश्च ।
दृष्टा मया परिवृता किल कर्म्मकाण्ड-
व्यादिष्टपद्धतिरथाध्वनि यज्ञविद्या ॥

पुरु । ततस्ततः ।

---

ममतापापेनेति शेषः । बन्धं संसारबन्धं । नीतान्यमूनीति । मूर्खाश्च ते मुखराश्चेति तैः । ते स्वेच्छयेत्यादिकमन्यपरार्द्धं तेन मूर्खमुखराद्रविड़देशी-याङ्गनाभिरुक्तानां वाचामिव मम गिरामर्थमविचार्य्य तत्त्वतोऽनिर्णीय विकल्पयन्ति नानाविधं व्याचक्षत इत्यर्थः । कृष्णाजिनेति । अथ मया अध्वनि यज्ञविद्या दृष्टा कीदृशी कृष्णाजिनादिभिः परिवृता जुहूः स्रुक् इष्टिपशुर्यज्ञीयपशुः सोमो लताविशेषस्तन्मुखैस्तदभिमुखैस्तत्सम्बन्धैर्मखैर्यज्ञै-रित्यर्थः । तथा कर्म्मकाण्डं यज्ञकर्म्मबोधकश्रुतिसमुदायस्तेन व्यादिष्टा दर्शिता

उप। ततो मया चिन्तितम् अपि नामैषा पुस्तकभारवाहिनी ज्ञास्यति मे तत्त्वं तत एतस्याः सविधे कतिचिद्दासराणि नयामि।

पुरु। ततस्ततः।

उप। ततस्तामहमुपस्थिता तया चाहमुक्ता भद्रे! किन्ते समीहितमिति ततो मयोक्तमार्य्ये! अनाथाहं त्वयि वस्तुमिच्छामि।

पुरु। ततस्ततः।

उप। ततस्तयोक्तं किन्ते कर्म्मेति ततो मयोक्तम्।

यस्माद्विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते
भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम्।

ततो यज्ञविद्यया चिन्तितम्।

पुमानकर्त्ता कथमीश्वरो भवेत्

---

पद्धतिः क्रियाकलापो यस्यास्तादृशी। यस्माद्विश्वमित्यादि। तं पूरुषं अहं प्रस्तौमि यस्मादित्यादिसमस्तविशेषणवैशिष्ट्येन प्रतिपादयामीत्यर्थः। यस्मात् पूरुषादिदं संसार उदेति जायते जन्म च मिथ्यावासनाशेषतत्स्वरूपं यत्र रमते क्रीडति विश्वमेव कर्तृ क्रीडा धरण्या अपि तदात्मकत्वात् यस्मिन् पुरुषे तदीयतत्त्वज्ञानदशायां पुनर्लीयते आत्यन्तिकाभावविषयीभवतीत्यर्थः। यस्य भासा प्रकाशेन जगद्विभाति यत्स्वरूपं महस्तेजः सहजानन्दमुज्ज्वलञ्चेत्यर्थः। कीदृशं पूरुषं शान्तं विषयव्यावृत्तं शाश्वतं नित्यं अक्रियं निश्चलं पूरुषं भूतेश्वरं सर्व्वप्राणेश्वरं अपुनर्भावाय पुनरुत्पत्त्यभावाय कृतिनो योगिनो द्वैतरूपं ध्वान्तमपास्य यान्ति प्रविशन्तीत्यर्थः। अत्राक्रियत्वेनाकर्तृत्वं बुद्ध्वाद्वैतज्ञानसाध्यत्वमवधार्य्य यज्ञविद्याह पुमानिति। अकर्त्ता

क्रिया भवच्छेदकरी न वस्तुधीः ।
कुर्वन् क्रिया एव नरो भवच्छिदः
शतं समाः शान्तमना जिजीविषेत् ।

तस्मान्नेह नातिप्रयोजनो भवत्याः परिग्रहः तथापि कर्त्तारं भोक्तारञ्च पुरुषं यदि स्तुवती कञ्चित् कालं वस्तुमिच्छसि तदा को दोषः ।

राजा । [ सोपहासम् ] अहो ! धूमान्धकारव्याकुलितदृशो दुष्प्रमत्वं यन्नविद्यया येनैव कुतर्कोपहता परामृषति ।

अयः स्वभावादचलं बलाच्चलत्यचेतनं चुम्बकसन्निधाविव ।
तनोति विश्वं शितुरीक्षितेरिता जगन्ति मायेश्वरतेयमीशितुः॥
तस्मात्तमोन्धानामेवेयमीश्वरदृष्टिः अबोधप्रभवञ्च विश्वं कर्म्मभिः शमयन्ते यन्नविद्या नूनमन्धतमसमन्धकारेणापनिनीषति ।
स्वभावनीलानि तमोमयानि प्रकाशयेद्यो भुवनानि सप्त ।

---

पुमान् कथं भूतेश्वरत्वेनोक्त ईश्वरोभवेदित्यर्थः । अद्वैतज्ञानस्य मुक्तिहेतुतां स्थापयति क्रियेति क्रिया यज्ञः सैव भवच्छेदकरी न वस्तुधीर्नाद्वैततत्त्वज्ञानं तस्माद्युयज्ञक्रियाएव भवच्छिदः कुर्व्वन् शतं समाजीवितुमिच्छेदित्यर्थः । तथापि कर्त्तारमिति अक्रियत्वेनाकर्तृत्वं शान्तत्वेन विषयभोगराहित्य-मित्याचरणेन तं कर्त्तारं पापादिकर्त्तारं फलभोक्तारञ्च स्तुवती प्रतिपादयन्ती यदि स्थातुमिच्छसीत्यर्थः । तस्याकर्तृत्वेऽपि तत्प्रेरितमायाकर्तृत्वाधीनं तस्य कर्तृत्वं विवेकः साधयति अयः स्वभावादिति विश्वेशितुर्विश्वेश्वरस्य ईक्षितेरिता विश्वप्रेरिता माया जगन्ति तनोति ईशितुर्विश्वेश्वरस्य इयमे-वेश्वरता स्वयमक्रियोऽपि मायाविशिष्टः सक्रिय इतीत्थं प्रतिपादिते तत्र दृष्टान्तमाह अयः स्वभावादिति स्वभावादचलमयोऽचेतनं लौहञ्च चुम्ब-कस्यायस्कान्तमणेः सन्निधौ यथा तत्तेजोबलाच्चलतीत्यर्थः । अन्धतमसमिति

तमेव विद्वानतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय, नान्योऽस्ति पन्था भुवि मुक्तिहेतुः॥

पुरु। ततस्ततः।

उप। ततो यज्ञविद्यया विसृष्टोऽस्मि सखि! त्वत्सन्निकर्षा-द्दुर्व्वासनोपहतैरस्मदन्तेवासिभिः कर्म्मसु श्रद्धादरैर्भवितव्यं तत् प्रसीदतु भवती अभिलषितदेशगमनाय।

पुरु। ततस्ततः।

उप। ततोऽहं तामतिक्रम्य प्रस्थिता।

पुरु। ततस्ततः।

उप। ततः कर्म्मकाण्डसहचरी मीमांसा मया दृष्टा।
विभिद्य कर्म्माण्यधिकारभाञ्जि श्रुत्यादिभिश्चानुगता प्रमाणैः।
अङ्गैर्विचित्रैरभियोजयन्ती प्राप्तोपदेशैरतिदेशनैश्च॥

पुरु। ततस्ततः।

उप। ततस्तामपि तथैव प्रार्थितवती अथ तयाप्युक्तास्मि भद्रे! किं कर्म्मासीति ततो देव! मया यस्मादित्यादि पठितम्।

---

अविरोधिनोरपि नाश्यनाशकभावमिच्छतीत्यर्थः। विवेकः स्वसिद्धान्तं निष्कृष्याह स्वभावेति। तमोमयानीति अत एव स्वभावनीलानीत्यर्थः। तमेव विद्वान् जानन् एवकारात्तु द्वितीयविषयज्ञानस्य व्यवच्छेदस्तथा चाद्वितीयत्वेन तं साक्षात् कुर्व्वन्नित्यर्थः। अतिमृत्युं मुक्तिं। मीमांसा कीदृशी विभिद्येति इदं कर्म्म एतदधिकारिकमित्येवमधिकारभाञ्जि कर्म्माणि विभिद्य पृथक् पृथक् कृत्वा तत्तदर्थैः श्रुतिरूपैरादिपदात् स्मृतिरूपैश्च प्रमाणैरनुगता तान्येव कर्म्माणि प्राप्तोपदेशैरङ्गैरतिदेशनैरतिदेशलभ्यैश्चाङ्गैर-भियोजयन्ती सम्बध्नती पौर्णमासयागादिषूपदेशस्तान्येव लिङ्गानि यज्ञान्तरे अतिदेशलभ्यानि अतिदेशनैरित्यत्रातिदिश्यत इत्यन्यतोऽपि चेति कर्म्मणि ल्युट्। यस्मादित्यादि पादत्रये सत्पदानां यज्ञपरतां बुद्धा यान्ति क्षतिन

पुरु । ततस्ततः ।

उप । ततो मीमांसया पार्श्ववर्त्तिनां मुखमालोक्याभिहितम् अस्त्येवास्यालोकान्तरफलोपभोगयोग्यपुरुषोपनयनेनोपयोगस्तद्भियतां कर्म्मोपयुक्तोयमिति । तच्च तेषां मध्ये केनाप्यन्तेवासिनानुमोदितम् अपरेण तु प्रसिद्धप्रतिष्ठितेन मीमांसाहृदयाधिदैवतेन कुमारिलस्वामिना प्रोक्तं देवि ! नेयं कर्म्मोपयुक्तं पुरुषमुपनयति किन्त्वकर्त्तारमभोक्तारं न चासौ कर्म्मसूपयुज्यते । ततः परेणोक्तम् अथ किं लौकिकात् पुरुषादीश्वरो नामान्योऽस्ति ततस्तेन विहस्योक्तमस्ति तथा हि—

एकः पश्यति चेष्टितानि जगतामन्यस्तु मोहान्धधी-
रेकः कर्म्मफलानि वाञ्छति ददात्यन्यस्तु तानर्थिने ।
एकः कर्म्मसु श्लिष्यते तनुभृतां शास्तैव देवोऽपरो-
निःसङ्गः पुरुषः क्रियासु स कथं कर्त्तेति सम्भाव्यते ॥

---

इत्यन्तेन सांसार्य्यात्मलोकान्तरफलभोगार्थं यं यज्ञं यान्तीति बुद्धा अस्त्येवास्या इत्यादि मीमांसाया उक्तिः । उपनयनेन प्रतिपादनेन । ततस्तेन विहस्येति तेन कुमारिलस्वामिना उपनिषत् सिद्धान्तानुवादरूपमुक्तमित्यर्थः अत एव स्वसिद्धान्तविरुद्धकथने विहस्येत्युक्तम् । एक इति । एकः परमात्मा जगतां चेष्टितानि पश्यति अन्यस्तु पापादिकर्त्ता जीवात्मा मोहान्धधीः एको जीवात्मा कर्म्मकर्त्तृत्वात् फलानि वाञ्छति अन्यस्तु परमात्मा तानि फलानि अर्थिने जीवात्मने ददाति एकजीवात्मा कर्म्मसु पापकर्म्मसु कृतेषु श्लिष्यते शास्तिं प्राप्यते अपरो देवस्तनुभृतां जीवात्मनां शास्तैव न तु शासनीयः अतः परमात्मभिन्नं जीवात्मानमेव भोक्तारं ब्रुवतां मते परमात्मन एव कर्तृत्वं यन्मीमांसया सम्भावितं कुमारिलस्वामी चतुर्थपादेन तन्निरस्यति निःसङ्ग इति क्रियासु निःसङ्गोऽनासक्तः स पुरुषः कथं कर्त्तेति त्वया मीमांसे सम्भाव्यत इत्यर्थः । अन्योपदेशेन जीवात्मपरमात्मनोरेकशरीराधिष्ठातृत्व

राजा। साधु कुमारिलस्वामिन्! साधु कुमारिलस्वामिन्! साधु प्राप्तोऽसि आयुष्मान् भव।

द्वौ द्वौ सुपर्णौ सहजौ सखायौ समानवृक्षं परिषस्वजाते।
एकस्तयोः पिप्पलमत्ति पक्वमनश्नन्नन्योऽभिचाकशीति॥

पुरु। ततस्ततः।

उप। ततोऽहं मीमांसामामन्त्र्य प्रस्थिता।

पुरु। ततस्ततः।

उप। ततो मया बहुभिः शिष्यैरुपास्यमाना तर्कविद्यावलोकिता।

काचिद्द्वैतविशेषकल्पनपरा न्यायैः परा तन्वती
वादं सच्छलजातिनिग्रहमयैर्जल्पं वितण्डामपि।
अत्रापि प्रकृतेर्विभिद्य पुरुषस्योदाहरन्ती भिदां

---

एकस्य च भोक्तृत्वं विवेकः सिद्धान्तयति द्वौ द्वाविति वीप्सा सुपर्णौ पक्षिणौ प्रकृते जीवात्मपरमात्मानौ सहजौ सहचरौ अत एव सखायौ समानवृक्षमेकं वृक्षं पक्षे एकं शरीरं परिषस्वजाते आलिलिङ्गतुः पक्वपिप्पलं तद्वृक्षफलं पक्षे निष्पन्नं कर्म्मफलं स्वर्गनरकादि अनश्नन्नभुञ्जानोऽभिचाकशीति देदीप्यत इत्यर्थः। काचिदिति। काचित्तर्कविद्या द्वैतविशेषस्य घटादेः पटादितः संसार्य्यात्मनस्त्वीश्वराद्भेदरूपस्य कल्पनपरा। पराऽन्या तर्कविद्या वादं तथा सच्छलजातिनिग्रहमयैर्न्यायैर्जल्पं वितण्डामपि तन्वती तत्त्वबुभुत्सोः कथा वादः तत्र बलच्छलादन्यायेन निग्रहः सच्छलेति छलसहितया जात्या यो निग्रहस्तन्मयैरित्यर्थः क्वचिज्जात्या क्वचिच्छलेन वा निग्रह इति यावत्। अन्याभिप्रायेणोक्तस्य वाक्यस्यान्यार्थकथनेन दूषणं छलं यथा नेपालदेशादयमागतो नवकम्बलवत्त्वादित्यादौ कुतोऽस्य नवसंख्याः कम्बला इत्युक्ता दूषणम्। दूषणासमर्थमुत्तरं जातिः। स्वपक्षापेक्षया परपक्षदूषणं जल्पः। परपक्षदूषणमात्रं वितण्डा। अन्यापि सांख्यरूपा

तत्त्वानां गणना परा महदहङ्कारादिसर्गक्रमैः ॥

पुरु । ततस्ततः ।

उप । तथैवाहं ताः समुपस्थिता ताभिरनुयुक्तया मया च तदेवोक्तं यस्माद्विश्वमुदेतीत्यादि । ततस्ताभिः सप्रकाशोपहासमुक्तम् आः पापे वाचाले ! परमाणुभ्यो विश्वमुत्पद्यते निमित्तकारणमीश्वर इति अनन्यया तु सक्रोधमुक्तम् आः पापे ! कथमीश्वरमेव विकारिणमापादयसि ननु रे ! प्रकृतिप्रधाना विश्वोत्पत्तिः ।

राजा । अहो ! दुर्म्मतयस्तर्कविद्या एतदपि न जानन्ति सर्वं प्रमेयजातं घटादिवत् कार्य्यमिति परमाणुप्राधान्यमप्यपेक्षणीयमेवेति अपि च ।

अम्भःशीतकरान्तरीक्षनगरं स्वप्नेन्द्रजालादिवत्
कार्य्यं मेयमसत्यमेतदुदयध्वंसादियुक्तं जगत् ।

---

तर्कविद्या पुरुषस्य प्रकृतेर्भिदां भेदमुदाहरन्ती महदहङ्कारादिसर्गक्रमैस्तत्त्वानां पञ्चतन्मात्राद्रूपतत्त्वानां गणनापरा । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः पुरुष आत्मा पञ्चतन्मात्राश्च रूपरसगन्धस्पर्शशब्दाः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्रा इति सृष्टिक्रमः । यस्माद्विश्वमुदेतीत्यत्र दुग्धं विकृत्य दधिवदयं विकृत्य विश्वमुदेतीत्यर्थं बुद्धा अन्यया सांख्यविद्यया सक्रोधमुक्तमित्यर्थः । परमाणुभ्यो विश्वमुत्पद्यत इति वादिनः प्रत्याह सर्व्वं प्रमेयेति सर्व्वं घटादिवत् प्रमेयजातं कार्य्यमित्यतः परमाणूनां प्राधान्यमप्यपेक्षणीयमेवेत्यर्थस्तथा च तदंशे तन्मतस्वमतयोर्न विवाद इत्येतदपि न जानन्तीत्यर्थः किन्तु परमाणुप्राधान्यापेक्षापीश्वरतत्त्वज्ञानाभावदशायाम् । जाग्रत्स्वप्ने नासत्यमेव दृश्यत इत्याह अपि चेति । अम्भसि प्रतिविम्बितः शीतकरश्चन्द्रः अन्तरीक्षे तद्रूपमेव दृश्यमानं नगरं स्वप्नदर्शनमिन्द्रजालादि च यथा तत्तत् कार्य्यं तथा मेयमुदयध्वंसादियुक्तमेतदसत्यमेव तर्हि कथं दृश्यत इत्यत आह युक्ताविति स्वात्मैवावबोधस्तत्स्वरूपे हरावज्ञाते

शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरा-
वज्ञाते प्रभवत्यथास्तमयति तत्त्वप्रबोधोदयात् ॥

विकारशङ्का तु मुग्धबधूविलसितमिव तथा हि—

शान्तं ज्योतिः कथमनुदितानन्दनित्यप्रकाशं
विश्वोत्पत्तौ व्रजति विकृतिं निष्कलं निर्मलञ्च ।
शश्वन्नीलोत्पलदलरुचाम्बुवाहावलीनां
प्रादुर्भावे भवति वियतः कीदृशोऽयं विकारः ॥

पुरु। साधु साधु प्रीणात्ययं मां प्रज्ञावतो विमर्षः [ उपनिषदं प्रति ] ततस्ततः ।

उप। ततः सर्व्वाभिरेव क्रुद्धाभिरभिहितम् अहो ! विश्वविलयेन मुक्तिमेषोदाहरन्ती नास्तिकपथप्रस्थिता तन्निगृह्यतामिति सावष्टम्भं मां निग्रहीतुं प्रधाविताः [ इति सर्वे सत्रासम् ]

---

तादृशमसत्यमपि कार्य्यजातं शुक्तौ रूप्यमिव स्रजि भुजग इव प्रभवति ज्ञानविषयीभवति अथानन्तरं तत्त्वप्रबोधोदयादस्तमयते ज्ञानाविषयीभवतीत्यर्थः। कथमीश्वरमेव विकारित्वमापादयसीति वादिनीं सांख्यविद्यां प्रत्याह विकारशङ्का त्विति। मुग्धायाः सुन्दर्य्या बध्वा यच्चेष्टितं तत्तदेव विलसितमिति यथा कामोपाधिकं ज्ञायते तथा स्वविकारेण विश्वोत्पादकत्वमीश्वरस्यापि मिथ्यावासनोपाधिकमेव ज्ञायत इत्यर्थः। वस्तुतस्तु निर्विकार एवेश्वर इत्याह तथा हीति शान्तमित्यादि। अविद्यावृतत्वेनानुदितोऽविनाशत आनन्दरूपो नित्यप्रकाशो यस्य तादृशं शान्तं ज्योतिरीश्वराख्यं कथं विश्वोत्पत्तौ विकृतिं व्रजति कीदृशं निष्कलं निरवयवं निर्म्मलं पापरूपमलरहितं देदीप्यमानं वा। ननु तस्माद्विश्वोत्पत्तौ कथं तस्य न विकार इत्यत आह शश्वदिति नीलोत्पलदलरुचामम्बुवाहावलीनां वियतः शश्वत्प्रादुर्भावे वियतः कीदृशो विकार इत्यर्थः। अहो विश्वविलयेनेति

उप । ततोऽहं सत्वरं परिक्रम्य दण्डकारण्यं प्रविष्टास्मि ततो मन्दरशैलोपकण्ठकल्पितमधुसूदनायतनस्य नातिदूरे आगत्य मम ।

बाह्वोर्भग्ना दलितमणयः श्रेणयः कङ्कणानां
चूडारत्नग्रहनिकृतिभिर्दूषितः केशपाशः ।
छिन्ना मुक्तावलिरपहृतं स्रस्तमङ्गाद्दुकूलम् ॥

राजा । ततः ।

पुरु । ततो देवायतनान्निर्गत्य गदपाणिभिः पुरुषैरतिनिर्दयं ताड्यमाना दिगन्तमतिक्रान्ताः ।

सर्वे । [ सहर्षं ] साधु साधु ! ! !

राजा । न खलु भवत्यामतिक्रमं भगवान् विश्वसाक्षी क्षमते ।

पुरु । ततस्ततः ।

उप । ततः ।

भीता गीताश्रममभिगलन्नूपुराहं प्रविष्टा ॥

तत्र वत्सया गीतया मां तत्रागतां विलोक्य ससम्भ्रमं मातर्मातरित्यभिधाय परिरभ्य उपवेशितास्मि विदितवृत्तान्तया च तयोक्तं अम्ब ! नात्र खेदयितव्यं मनो ये खलु त्वामप्रमाणीकृत्यासुरसत्वाः प्रचरिष्यन्ति तेषामीश्वर एव शास्ता उक्तञ्च तेन भगवता तानेवाधिकृत्य ।

---

अथास्तमयते तत्त्वप्रबोधोदयादित्युक्तत्वात् । बाह्वोर्भग्ना इति । देवायतनाद्दूरे मम बाहुकङ्कणादिभङ्गादिकं कृतमित्यर्थः । दुकूलमङ्गात् स्रस्तं यदपहृतमित्यर्थः अङ्गात् स्रस्तीकृत्यापहृतमिति पर्य्यवसितम् । पादत्रयानन्तरं

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

पुरु । त्वत्प्रसादाज्ज्ञातुमिच्छामि। कोऽयमीश्वरोनामेति।

उप । [ सस्मितं ] कोयमात्मानमजानन्तं प्रत्युत्तरेण प्रबोधयिष्यामि ।

पुरु । [ सहर्षं ] कथमात्मा ईश्वरः ।

उप । एवमेवैत्तथा हि ।

असौ त्वदन्यो न सनातनः पुमान्
भवान्न देवात् पुरुषोत्तमात् परः ।
सएव भिन्नस्तदनादिमायया
द्विधेव बिम्बं सलिले विवस्वतः ॥

पुरु । [ विवेकं प्रति ] वत्स ! उक्तमप्यर्थं भगवत्या न सम्यगवधारयामि ।

अवच्छिन्नस्य भिन्नस्य जरामरणधर्म्मिणः ।
मम ब्रवीति देवीयं नित्यानन्दचिदात्मताम् ॥

विवेकः । पदार्थानभिज्ञानादयं वाक्यार्थानवबोधः ।

पुरु । तदवबोधनाय भवानुपायं प्रज्ञापयतु ।

विवेकः । अयमुच्यते ।

---

यदुत्तरं संस्कृतमालेख कथयित्वा चतुर्थमाह भीता गीतेति । तानहमिति गीताश्लोकः । तान्नराधमानधमनरानासुरीष्वेव योनिष्वजस्रमेव क्षिपामीत्यर्थः । कथयात्मा ईश्वर इति कथमहमित्यर्थः । असाविति असौ सनातनो नित्यः पुमान्न त्वदन्यः तस्मात् पुरुषोत्तमात् देवात् भवान्न परो नान्यः तदनादिमायया तदीयया अनादिमायया कारणभूतया स एव भिन्नः सलिले विवस्वतो बिम्बमिव द्विधा प्रतीयत इत्यर्थः । अवच्छिन्नस्येत्यादि

एषोऽस्मीति विविच्य नेति परितश्चित्तेन सार्द्धं कृते
तत्त्वानां विलये चिदात्मनि परिज्ञाते त्वदर्थे पुनः ।
श्रुत्वा तत्त्वमसीति बाधितभवध्वान्तं तदात्मप्रभं
शान्तं ज्योतिरनन्तमन्तरुदितानन्दं समुद्योतते ॥

पुरु । [ सानन्दं श्रुतमर्थं परिभावयति ]

ततः प्रविशति निदिध्यासनम् ।

निदि । आदिष्टमस्मि देव्या विष्णुभक्त्या यथा वत्स ! निगूढमस्मदभिप्रायमुपनिषद्विवेकेन सह प्रबोधयितव्या त्वया च पुरुषे वस्तव्यमिति [ विलोक्य ] एषा देवी विवेकपुरुषाभ्यां नातिदूरे वर्त्तते यावदुपसर्पामि [ इत्युपसृत्य उपनिषदं प्रति जनान्तिकम् ] देवी ! देव्या विष्णुभक्त्या समादिष्टं यथा सङ्कल्पयोनयो देवता भवन्ति मया च प्रणिधानेन विदितं यथा आपन्नसत्वा भवतीति तत्र क्रूरसत्वा विद्या नाम कन्या त्वदुदरे वर्त्तते प्रबोधचन्द्रश्च तत्र विद्यां सङ्कर्षणविद्यया मनसि संक्रामयिष्यसि प्रबोधचन्द्रं पुरुषे समर्प्य मत्सकाशमागमिष्यसीति ।

---

सुगमम् । एषोऽस्मीति । चित्तेन सार्द्धं विविच्य विवेचनां कृत्वा परितस्तत्त्वानां घटपटादिपदार्थानां नेति विलये कृते सर्व्वं नेति विज्ञात इत्यर्थस्तत एषोऽस्मीति चिदात्मनि ज्ञानस्वरूपात्मनि परिज्ञाते सति तत्त्वमसीति तत्ब्रह्मस्वरूपमहंपदार्थोऽपि तत्त्वमसीति श्रुतिवाक्यात् श्रुत्वा त्वदर्थे पुनर्ज्ञाते सति आत्मनि प्रभा यस्य तादृशं स्वप्रकाशं बाधितभवध्वान्तं शान्तं सज्ज्योतिरन्तः समुद्द्योतते प्रकाशते कीदृशमनन्तं नित्यम् उदितानन्दं व्याप्तानन्दस्वरूपम् । निदिध्यासनं चरमयोगविशेषः । निगूढमिति सङ्कल्पयोनय इत्यादिना वक्ष्यमाणमस्मदभिप्रायम् । विवेकेन सह उपनिषत् प्रबोध्यतामित्यर्थः । पुरुषे वस्तव्यं पुरुषे वासः कार्य्यः । जनान्तिकं कर्णे कथा ।

उप । यदादिशति देवी [ इति विवेकमाह्वाय निष्क्रान्ता ]

[ निदिध्यासनञ्च पुरुषं प्रविशति ]

[ नेपथ्ये ] आश्चर्य्यमाश्चर्य्यम् ।

उद्दामद्युतिधामभिस्तड़िदिव प्रद्योतयन्ती दिशः
प्रत्यग्रस्फुटदुत्कटास्थि मनसो निर्भिद्य वक्षःस्थलम् ।
कन्येयं सहसा समं परिकरैर्मोहं ग्रसन्ती भज-
त्यन्तर्द्धानमुपैति चैष पुरुषं श्रीमान् प्रबोधोदयः ॥

[ ततः प्रविशति प्रबोधचन्द्रः ]

प्रबो । किं व्याप्तं किमपोहितं किमुदितं किं वा समुत्सारितं
स्यूतं किं नु विसर्पितं नु किमिदं किञ्चिन्नु वा किञ्चन ।
यस्मिन्नभ्युदिते वितर्कपदवीं नैवं समारोहति
त्रैलोक्यं सहजप्रकाशदलितं सोऽहं प्रबोधोदयः ॥

---

नेपथ्ये अशरीरायाः सरस्वत्या वाणी आश्चर्य्यमाश्चर्य्यम् । उद्दामेति । इयं कन्या विद्यारूपा कन्या परिकरैर्योगोपसर्गैः समं मोहं ग्रसन्ती सहसान्तर्द्धानं भजति एष च श्रीमान् प्रबोधोदयः पुरुषमुपैति । कन्या किं कृत्वा मोहं ग्रसतीत्यत आह प्रत्यग्रेति प्रत्यग्रं कालं स्फुटं द्विधाभवत् उत्कटमस्थि यस्मात्तादृशं यथा स्यात्तथा मनसो वक्षःस्थलं निर्भिद्य विदार्य्य कीदृशी कन्या उद्दामद्युतिभिर्धामभिस्तेजोभिर्दिशः प्रद्योतयन्ती तड़िदिव । किं व्याप्तमित्यादि । सोऽहं प्रबोधोदय उदीयमानः प्रबोधस्तत्त्वज्ञानरूपो यस्मिन्नभ्युदिते सहजप्रकाशेन दलितमुज्ज्वलीकृतं त्रैलोक्यं नैव वितर्कपदवीमारोहति वितर्कश्चात्र सम्भावना उत्सारिते दीपादिनाऽपसारितेऽन्धकारादौ किमुत्सारितमिति सम्भावनास्तु वस्त्रादौ स्यूतं किं न्विति सम्भावना विसर्पिते वाल्यादौ विसर्पितं नु किमिदमिति सम्भावना एकपदार्थेऽपरपदार्थभ्रमरूपा किञ्चिन्नु वा किञ्चनेति सम्भावना सा च स्थाणावयं नु पुरुष इत्येवमादिरूपा त्रैलोक्यमेवं वितर्कपदवीं न समारोहति सर्व्वपदार्थाद्वैतभावने किमपि

[ परिक्रम्य ] एष पुरुषः यावदुपसर्पामि [ उपसृत्य ] भगवन् ! प्रबोधचन्द्रोदयोऽहमभिवादये ।

पुरु । [ सश्लाघम् ] एहि वत्स ! परिष्वजस्व माम् ।

प्रबो । [ तथा करोति ]

पुरु । [ आलिङ्गय सानन्दम् ] अहो विघटिततिमिरपटलं प्रभातं जातं तथा हि—

मोहान्धकारमवधूय विकल्पनिद्रा-
मुन्मथ्य कोऽप्यजनि बोधतुषाररश्मिः ।
श्रद्धाविवेकमतिशान्तियमादि येन
विष्णवात्मकं स्फुरति विष्णुरहं स एषः ॥

तत् सर्वथा कृतकृत्योऽस्मि भगवत्या विष्णुभक्त्याः प्रसादात् सोऽहमिदानीम् ।

सङ्गं न केनचिदुपेत्य कमप्यपृच्छन्
गच्छन्नतर्कितफलां विदिशं दिशं वा ।
शान्तो व्यपेतभयशोककषायमोहः
सायं गृही मुनिरहं भवितास्मि सद्यः ॥

[ प्रविश्य विष्णुभक्तिः सहर्षमुपसृत्य ]

---

किञ्चित्त्वेन न भासत इत्यर्थः । मोहान्धकारमिति कोऽपि मम बोधरूपस्तुषाररश्मिश्चन्द्रोऽजनि किं कृत्वा मोहरूपम् अन्धकारमवधूय स्वसहजया विद्यया तदुपशमनमेव तदवधूननं बोध्यं विकल्पस्तत्तत्पदार्थेषु तत्तद्विशिष्टज्ञानं जाग्रत्स्वरूपं तादृशीं निद्रां स्वप्नमनुन्मथ्यानेन बोधोदयेन हेतुना श्रद्धादिकं विष्णवात्मकं स्फुरति अहमपि स एष विष्णुः । सङ्गं न केनचिदिति । सोऽहमिदानीं केनचित् सह सङ्गं नोपेत्य कमप्यपृच्छन्नतर्कितफलाम् असम्भावितफलां दिशं विदिशं वा गच्छन् शान्तो व्यपेतभयादिः सायंगृहः सायंकालगृहीतनिवासस्थानो मुनिरहं भवितास्मीत्यर्थः । शोककषायमोह इत्यत्र कषायः

चिरेणास्माकं सम्पन्ना मनोरथाः येन प्रशान्तारातिं भवन्तमालोकयामि ।

पुरु । देव्याः प्रसादात् किं नाम दुर्लभमिति [ पादयोः पतति ]

विष्णु । [ पुरुषमुत्थापयन्ती ] उत्तिष्ठ वत्स ! किन्ते भूयः प्रियमुपकरोमि ।

पुरु । भगवति ! अतः परं न मे प्रियमस्ति यतः ।

प्रशान्तारातिरगमद्विवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे स्वे पदेऽहं निवेशितः ॥

तथाप्येतदस्तु ।

पर्जन्योऽस्मिन् जगति महतीं वृष्टिमिष्टां विधत्तां
राजानः क्ष्मां शमितविविधोपप्लवाः पालयन्तु ।
तत्त्वोन्मेषादपहततमस्त्वत्प्रसादान्महान्तः
संसाराब्धिं विषयममतातङ्कपङ्कं तरन्तु ॥

[ इति निष्क्रान्ताः सर्व्वे ]

इति श्रीकृष्णमिश्रविरचिते प्रबोधचन्द्रोदयनाटके
जीवन्मुक्तिर्नाम षष्ठोऽङ्कः समाप्तः ।

---

क्रोधः । प्रशान्तारातिरित्यादि । नीरजस्के निर्म्मले स्वे पदे स्थाने निवेशितोऽभिषिक्तोकृतः भेदबुद्धिव्युदासादिति भावः । तथाप्येतदस्त्विति । एतच्च सर्वनाटकानामन्ते प्रकृतवक्तृकमपि नटक्रियमाणसभाशीर्वादरूपं बोध्यम् । अस्मिन् जगति पर्जन्यो मेघ इष्टां महतीं वृष्टिं विधत्तां जनयतु शमितो नाशितो लोकानां विविध उपप्लवो यैस्तादृशा राजानः क्ष्मां पृथिवीं पालयन्तु महान्तो योगिनस्त्वत्प्रसादात् तत्त्वोन्मेषादपहततमो यथा स्यात्तथा संसाराब्धिं तरन्तु कीदृशं ममतातङ्कावेव पङ्को यत्र तादृशम् ।

इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्य्यकृतायां प्रबोधचन्द्रोदयटीकायां ग्रन्थसमापकषष्ठाङ्कविवरणं ।

सम्पूर्णम् ।

| | | |
|---|---|---|
| ३३ | भाषापरिच्छेद मुक्तावलीसहित ... | १ |
| ३४ | बहुविवाहवाद .. | ।० |
| ३५ | दशकुमारचरित—सटीक ... | १॥० |
| ३६ | परिभाषेन्दुशेखर ...... | ॥।० |
| ३७ | कविकल्पद्रुम (वोपदेवकृत) ... | ॥० |
| ३८ | चक्रदत्त (वैद्यक) | १॥० |
| ३९ | उणादिसूत्रस-टीक ... | २ |
| ४० | मेदिनी कोष ... | १ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] ... | २॥० |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पू काव्य) ... | ॥० |
| ४३ | माधवचम्पू | ।= |
| ४४ | तर्कसंग्रह (इंगाजी अनुवाद सहित) | ॥० |
| ४५ | प्रसन्नराघव नाटक (श्रीजयदेव कवि रचित) | १ |
| ४६ | विवेक चूड़ामणि [श्रीमत् शङ्कराचार्य्य विरचित] | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] ... | ५ |
| ४८ | सिद्धान्तशासन—सटीक ... | ।० |
| ४९ | ऋतुसंहार—सटीक ... | ।= |
| ५० | विक्रमोर्वशी—सटीक ... | १॥ |
| ५१ | वसन्ततिलकभाण ... | ।= |
| ५२ | मायणी ... | ॥० |
| ५३ | सांख्यदर्शन (भाष्य सहित) सांख्य प्रवचन भाष्य | २ |
| ५४ | भोजप्रबन्ध ... | ॥।० |
| ५५ | नलोदय—सटीक ... | ॥= |
| ५६ | ईश केन कठ, प्रश्न मुण्ड, माण्डूक्य,[सटीक स भाष्य] | ५ |
| ५७ | छान्दोग्य (उपनिषद्) सभाष्य-सटीक ] | ५ |
| ५८ | तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक ... ... | २ |
| ५९ | वृहदारण्यक (उपनिषद्) [भाष्य सहित] | १० |
| ६० | सुश्रुत ... | ४ |
| ६१ | शार्ङ्गधर [वैद्यक] ... | १ |
| ६२ | वेतालपञ्चविंशति ...... | ॥० |
| ६३ | पातञ्जल दर्शन [सभाष्य-सटीक] | |
| ६४ | वाचस्पतिविवेक [शौचाधिकार] | |
| ६५ | मुक्तिकोपनिषत् | |

६६ उपमान चिन्तामणि ... ।०
६७ नागानन्द नाटक ... १
६८ पूर्णप्रज्ञ दर्शनम् मध्वस्वामि कृत भाष्य सहितम् २
६९ चन्द्रशेखर चम्पू काव्यम् सम्पूर्ण ... ३
७० सामवेदस्य मन्त्र ब्राह्मणम् भाष्य सहितम् ... २
७१ आरण्य संहिता भाष्य सहिता ... १
७२ विद्धशाल भञ्जिका नाटिका ... १
७३ कारण्डव्यूह [बौद्धशास्त्रम्] ... २
७४ कुवलयानन्द—सटीक ... ३
७५ प्रियदर्शिका नाटिका-सटीक [श्रीहर्ष विरचित] ॥०
७६ सारस्वत व्याकरण—सटीक पूर्वार्द्ध ... १।
७७ वासवदत्ता—सटीक ... २
७८ पुष्पवाण विलास काव्य [कालिदास कृत] सटीक ॥०
७९ महिष शतकम्, पदारविन्द शतकम्, स्तुति शतकम्, मन्दस्मित शतकम्, कटाक्ष शतकम् ... १
८० मनुसंहिता-कुल्लुकभट्ट कृत टीका सहित ... ५
८१ नैषध चरितम् (मल्लिनाथ कृत टीका सहित)... १०
८२ चन्द्रालोक (प्राचीन अलङ्कार ग्रन्थ) ... ॥०
८३ वीरमित्रोदय [स्मृति शास्त्र] ... १०
८४ भावप्रकाश [वैद्यक] ... १०
८५ प्रबोधचन्द्रोदय नाटक—सटीक ... २
८६ अनर्घराघव नाटक [मुरारि कृत] ... २
८७ दैवतब्राह्मण सभाष्य ... १
८८ षड्‌विंश ब्राह्मण सभाष्य ... १
८९ मीमांसा परिभाषा ... ॥०
९० अर्थ संग्रह (लौगाक्षी कृत) [मीमांसा] .. ॥०
९१ रघुवंश—सटीक ... १॥०
९२ मेघदूत—सटीक ... ॥०
९३ ईश्वर निरूपणम् [तर्कवाचस्पति कृतम्] ... १
९४ ईश्वरानुचिन्तामणि [गङ्गेशोपाध्याय कृत] ... १
९५ न्यायदर्शन [ सभाष्य-सवृत्ति ] .. २॥०

कलिकाता संस्कृत विद्या मन्दिरे—वि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य
सकाशात् लभ्यानि ।